अथ वाऽलुक् प्रकृतः सोऽनुवर्त्तिष्यते ॥

कथं पुनरनूङित्यनेन स्त्रीप्रत्ययस्य ग्रहणं शक्यं विज्ञातुम् ?॥*॥ नञिव-युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः॥*॥ नञ्युक्तमिवयुक्तञ्चाऽन्यस्मिंस्तत्सदृशे कार्यं विज्ञायते । ['तथा ह्यर्थगतिः'] । तथा ह्यर्थो गम्यते । तद्यथा,—अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं पुरुषमानयति नाऽसौ लोष्टमानीय कृती भवति। एवमिहाप्यनूङित्युक्ते ऊङ्प्रतिषेधादन्यस्मिन् ऊङ्सदृशे कार्यं विज्ञास्यते ॥ किं चान्यदनूङ् ऊङ्सदृशं ? ॥ स्त्रीप्रत्ययः ॥ एवमपि इडविड्वृन्दारिका ऐडविडवृन्दारिका । पृथ्वृन्दारिका पार्थवृन्दारिका । उशिग्वृन्दारिका औशिजवृन्दारिका । दरद्वृन्दारिका दारदवृन्दारिका,—अत्र पुंवद्भावो न प्राप्नोति ॥ कर्तव्योऽत्र यत्नः ॥ अथेह कथं भवितव्यं-पट्वीमृद्वयौ भार्ये

प्र.]नन्वलौकिकत्वादस्य कथं निपानादिति परिहारः ?। लुकाऽपि तर्ह्यलौकिकत्वान्न भाव्यम्।अथ लुक्प्रसङ्गोऽध्यवसीयतेऽलुगप्यध्यवसीयतामित्यदोषः। अथ वेति । ननु च परार्थत्वात् कथं लक्षणयोः सम्बन्धः?।उच्यते। अलुगधिकारसामर्थ्याल्लक्षणाङ्गमपि लक्षणं भविष्यति,संज्ञापरिभाषवत्। इडविडिति।इडविडोऽपत्यं.पृथो(र)पत्यं। जनपदशब्दादित्यञ् । उशिग्दरद्भ्यां 'द्व्यञ्मगधे'त्यण् । उभयोरतश्चेति स्त्रियां लुक् । कर्त्तव्योऽत्र यत्न इति । नेह टावादीनामेव ग्रहणं किं तर्हि प्रत्ययमात्रस्य । लुक् न स्थानिवद्भावात्प्रत्ययो भवत्येव। यदा तु भाषितपुंस्कादूङ्यस्मिन्नकृतः स भाषितपुंस्कादनूङिति प्रसज्यप्रतिषेध आश्रीयते तदा दोषस्याऽप्रसङ्ग एव । पट्वीमृदुभार्ये

उ.]विप्रतिषेधोपपादनपरभाष्यं त्वेकदेश्युक्तिः । स्पष्टीकृतञ्च तत्त्वं कैयटेनेति दिक् । समुदाय इति । प्रत्ययविशिष्ट इत्यर्थः। अवयवेनेति। प्रत्ययेतरहिताऽर्थकेन, प्रत्ययमात्रार्थकेन चेत्यर्थः । नन्वलौकिकत्वादिति । शास्त्रातिरेकेण लोकेऽप्रयुज्यमानत्वादित्यर्थः । इत्यदोष इति । एवञ्च 'निपातना'दित्यस्य सौत्रत्वादित्यर्थ इति भावः । लक्षणाङ्गमपीति । शास्त्रमात्राऽङ्गमपीत्यर्थः । 'गुणः कृतात्मसंस्कार' इति न्यायेनेति भावः । नन्वनूङ्शब्देन पुंवद्भावविषयशब्दस्योक्तावत्राप्यनुपपत्तिरिति शङ्कते भाष्ये—कथं पुनरिति । 'पृथोऽपत्य'मिति पाठः । 'पृथोरपत्य'मित्यपपाठः । पार्थेत्यसिद्ध्यापत्तेः । भाष्येऽपि 'पृथ्वृन्दारिके'ति पाठः। स्त्रियां लुगिति । भाषितपुंस्कादनूङः स्त्रीप्रत्ययस्याऽभावात्प्रत्ययलक्षणेन सत्त्वेऽपि विशेषानतिदेशेन तस्य स्त्रीप्रत्ययत्वाऽभावात् पुंवत्त्वं न स्यादिति भावः। नेहेति। प्रत्ययत्वेन सादृश्य-

१ 'प्रत्ययग्रहणं' । २ वाचनिकीयं परिभाषा । ३ 'मन्यस्मिं' । ४ इदं लुप्तं स्यात् । ५ 'सदृश आनीयते'। ६ 'उक्ते' इति क्वचिन्न । ७'स्त्रीप्रत्यय इति' । ८ 'इडविट्' । ९ 'पृथुन्दा' । 'पृथव' । १० 'प्रयत्नः' । ११ प्रत्ययपररहिता' ।

अस्य पट्वीमृदुभार्यः, आहो स्वित्पटुमृदुभार्यः इति?॥पट्वीमृदुभार्य इति भवितव्यम् ॥ पुंवद्भावः कस्मान्न भवति ? ॥ 'भाषितपुंस्का'दित्युच्यते । ननु च भोः पटुशब्दो मृदुशब्दश्च पुंसि भाष्येते ॥ समानायामाकृतौ यद्भाषितपुंस्कम् । आकृत्यन्तरे चैतौ भाषितपुंस्कौ॥ समानायामाकृतावप्येतौ भाषितपुंस्कौ ॥ कथम् ?॥ आरभ्यतेऽत्र[1] मतुब्लोपः ॥ एवं तर्हि भाषितपुंस्कादनूङ्[2] समानाधिकरण उत्तरपदे पुंवद्भवतीत्युच्यते । यश्चात्र भाषितपुंस्कादनूङ्समानाधिकरण उत्तरपदे,–कृतस्तस्य पुंवद्भावः । यस्य चाऽकृतो, नासौ भाषितपुंस्कादनूङ्समानाधिकरण उत्तरपदे ॥*॥ पूरण्यां प्रधानपूरणीग्रहणम्[3] ॥*॥

प्र.]इति।पट्वीशब्दस्योत्तरपदेनाऽनन्तर्याभावात् पुंवद्भावाऽभावो, मृद्वीशब्दस्यानन्तर्यात् पुंवद्भावः । इतरो यथोक्तमप्रतिपद्याह–पुंवद्भावः कस्मान्न भवतीति । भाषितपुंस्कादिति । एकदेशेन समस्तं सूत्रं लक्ष्यते । तत्रोत्तरपदेनाऽनन्तर्याभावात् पट्वीशब्दस्य पुंवद्भावाऽभावः। इतरस्तु भाषितपुंस्कत्वमत्र नास्तीत्यनेनोक्तमिति मत्वाह–ननु चेति ।इतरः शिष्यबुद्धिपरीक्षार्थमाह–समानायामिति । आकृत्यन्तर इति। पटुर्गुणो मृदुर्गुण इति गुणे भाषितपुंस्कौ, भार्यादौ तु स्त्रीलिङ्गाविति भावः । आरभ्यत इति । ततश्च पाटवे मार्दवे च समानप्रवृत्तिनिमित्ते पटुमृदुशब्दौ पुंसि स्त्रियां च वर्त्तेते । इदानीमाचार्यः स्वाभिप्रायं प्रकाशयति—एवं तर्हीति । कल्याणपञ्च-

उ.]माश्रीयत इति भावः । स्थानिवद्भावादिति । प्रत्ययलक्षणेन, स्थानिवदादेश इत्यनेन वा । प्रसज्यप्रतिषेध इति । समासस्तु सौत्रत्वादिति भावः । अत्र कर्मधारयसमासोदाहरणानि तु पुंवत्कर्मधारयेत्यत्राप्यस्यानुवृत्तिं दर्शयितुं तदर्थं निर्णेतुञ्च । 'ऐडविडभार्य' इत्यादावपि दोषो बोध्यः । अनन्तराऽपत्यपरत्वे जातित्वाऽभावेन 'जातेश्चे'ति निषेधाप्रवृत्तेः।'कर्त्तव्योऽत्र यत्न' इत्यस्य भाष्यस्यायमर्थः–प्रसज्यप्रतिषेध आश्रयणीयः, रूपातिदेशश्च । रूपञ्च प्रत्यासत्त्या पुंवद्भावभाजः शब्दस्य प्रयोगान्तरे पुमांसमाचक्षाणस्य गृह्यते । तेन हंसवरटादौ न दोषः। यद्यप्यत्राप्यर्थस्याऽनिवृत्तेर्वातण्ड्ययुवत्यादौ दोषस्तथापि अतिदिश्यमानरूपविरुद्धस्वाश्रयस्यातिदेशविषयेऽप्रवृत्तेर्न दोषः । स्त्रीप्रत्ययनिवृत्त्यतिदेशपक्षे तु न तयोः कश्चिद्विरोध इति न पूर्वभाष्याऽसङ्गतिः । किञ्च स्त्रीत्वविशिष्टार्थवाचकशब्दस्थाने पुंस्त्ववाचकशब्दरूपातिदेशे विशिष्टस्य निवृत्तिरित्यर्थस्यापि निवृत्तिरेव । (७९२पृ.)'समासनिर्देशोऽय'मित्यादि 'ऊङ्न्दशः स्त्रीप्रत्ययं'इति भाष्यन्त्वेकदेश्युक्तिः।पट्वीशब्दस्येति।ससुदायस्तु न भाषितपुंस्क इति भावः।तस्योत्तरत्वानुपपत्तेराशयमाह–एकदेशेनेति।ततश्च पाटवे इति।गुणे प्रवृत्तिनिमित्ते द्रव्ये इमौ भाषित-

१ 'कृतावेतावपि' 'माकृतावपि'। २'नै यत्न'। ३'सूत्रे'। ४ 'इदं ... यो लमम्'।

पूरण्यां प्रधानपूरणीग्रहणं कर्तव्यम्। [प्रधानं या पूरणी तत्रेति वक्तव्यम्]। इह मा भूत्,—कल्याणी पञ्चम्यस्य पक्षस्य कल्याणपञ्चमीकः पक्ष इति॥

अथेह कथं भवितव्यम्—कल्याणी पञ्चमी आसां रात्रीणामिति?॥ 'कल्याणीपञ्चमा रात्रय' इति भवितव्यम्। रात्रयोऽत्र प्रधानम्॥

## तसिलादिष्वा कृत्वसुचः॥ ६।३।३५॥

इह केचित्तसिलादय आ कृत्वसुचः पठ्यन्ते येषु पुंवद्भावो नेष्यते, केचिच्चाऽन्यत्र पठ्यन्ते येषु पुंवद्भाव इष्यते, तत्र किं न्याय्यम्?॥ तसिलादिषु परिगणनं कर्तव्यम्॥*॥ तसिलादी त्रतसौ॥*॥ त्रतसौ तसिलादी द्रष्टव्यौ। तस्यां शालायां वसति तत्र वसति। तस्याः ततः। यस्यां यत्र। यस्याः यतः॥*॥ तरप्तमपौ॥*॥ तरप्तमपौ तसिलादी द्रष्टव्यौ। दर्शनीयतरा दर्शनीयतमा॥*॥ चरड्जातीयरौ॥*॥ चरड्जातीयरौ तसिलादी द्रष्टव्यौ। पटुचरी पटुजातीया॥*॥ कल्पब्देशीयरौ॥*॥ कल्पब्देशीयरौ तसिलादी द्रष्टव्यौ। [पटुकल्या पटुदेशीया] दर्शनीयकल्पा दर्शनीयदेशीया॥*॥ रूपप्पाशपौ॥*॥ रूपप्पाशपौ तसिलादी द्रष्टव्यौ। दर्शनीयरूपा दर्शनीयपाशा॥*॥ थम्थालौ॥*॥ थम्थालौ तसिलादी द्रष्टव्यौ। कयाऽऽकृत्या कथम्। ययाऽऽकृत्या यथा। ॥*॥ दार्हिलौ॥*॥ दार्हिलौ तसिलादी द्रष्टव्यौ। तस्यां वेलायां तदा। [तस्यां वेलायां] तर्हि॥*॥ तिल्थ्यनौ॥*॥ तिल्थ्यनौ तसिलादी द्रष्टव्यौ।

---

प्र.] मीक इति। पक्षेऽन्यपदार्थेऽवयवानामत्यन्ततिरोधानान्नास्ति पूरण्याः प्राधान्यम्। 'अप्पूरणीप्रमाण्यो'रिति समासान्तोऽपि प्रधानपूरण्या एव विहित इत्यत्र न भवतीति 'नद्यृतश्चे'ति कप् भवति। इतरस्तु सर्वत्र बहुव्रीहौ वर्त्तिपदार्थस्याऽप्राधान्यं मत्वा पृच्छति—अथेह कथमिति। रात्रयोऽत्रेति। उद्भूतावयवा रात्रयोऽत्र प्रधानं। तत्र यथैव प्रथमाद्या रात्रयः समासाऽभिधेया एवं पञ्चम्यपीति वर्त्तिपदार्थस्यान्यपदार्थेऽनुप्रवेशात् प्राधान्यमित्यर्थः। प्रधाने कार्यसंप्रत्ययात् प्रधानपूरणीग्रहणमित्याहुः।

तसिला। 'पटुकल्पे'त्यपपाठः। 'घरूपकल्पे'ति परत्वाद्ध्रस्वस्य भावात्।

---

उ.] पुंस्कावित्यर्थः। अत्रोत्तरपदेन पूर्वपदं नाक्षिप्यते, एतद्भाष्यप्रामाण्यादिति बोध्यम्। पक्षोऽन्यपदार्थ इति। तिरोहितावयवभेदसमुदायस्य पक्षशब्देनाभिधानात्तत्रावयवानामनुमीयमानत्वेनाऽशब्दार्थत्वादप्राधान्यमिति भावः। रात्रय इति। बहुवचनान्तरात्रिशब्दवाच्यः समुदाय इत्यर्थः। [स्त्रियाः पुंवद्भाषित]।

तसिलादिष्वा। भाष्ये—आकृत्येति पाठः। ननु वृक्षीशब्दस्य जातिशब्द-

---

१ अयमंशः क्वचिन्न। २ इतिः क्वचिन्न। ३ 'कल्याणपञ्चमा रात्रयः'। ४ 'तसिलादिषु परिगणन'मिति वार्त्तिकमित्यन्ये। ५ 'कया प्रकृत्या'। ६ 'यया प्रकृत्या'। ७ इदं क्वचिन्न।

वृकी । वृकतिः । अजथ्या यूथिः[1] ॥*॥ शसि बह्वल्पार्थस्य[2] ॥*॥ शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः । बह्वीभ्यो देहि बहुशो देहि । अल्पशो देहि । ॥*॥ त्वतलोर्गुणवचनस्य॥*॥त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः । पट्व्या भावः पटुत्वम् । पटुता । [मृद्व्या भावः मृदुत्वम्। मृदुता]॥ गुणवचनस्येति किमर्थम् ? ॥ कठ्या भावः कठीत्वम् । कठीता ॥*॥ भस्याऽढे तद्धिते ॥*॥ भस्याढे तद्धिते पुंवद्भावो वक्तव्यः। हस्तिनीनां समूहो हास्तिकम् ॥ अढ इति किमर्थम् ? ॥ श्यैनेयः रौहिणेयः ॥ यद्यढ इत्युच्यते अग्नायी देवताऽस्य स्थालीपाकस्य आग्नेयः स्थालीपाकः—अत्र न प्राप्नोति । इह च प्राप्नोति-

प्र.]तस्माद्दर्शनीयकल्पेति पाठः । वृकतिरिति । लिङ्गविशिष्टपरिभाषया वृकीशब्दात् 'वृकज्येष्ठाभ्या'मिति तिल्प्रत्ययः। परिगणनसामर्थ्याच्च जातेश्चेति पुंवद्भावप्रतिषेधाऽभावः । अजथ्येति । पूर्ववदजाशब्दादजाविभ्यां थ्यन्निति थ्यन् प्रत्ययः । हास्तिकमिति । यद्यत्र पुंवद्भावो न स्यात्तदा हस्तिनीशब्दस्य 'यस्येति चे'ति लोपे कृते तस्य स्थानिवत्त्वादसिद्धत्वाच्च नस्तद्धित इति टिलोपो न स्यादिति पुंवद्भावो विधीयते । 'ठक्छसोश्चे'त्यनेनाऽत्र पुंवद्भावो न भवति, छसा सहचरितस्य ठको ग्रहणात् । श्यैनेय इति । श्येतरोहिताभ्यां 'वर्णा'दिति ङीब्नकारौ । पुंवद्भावे श्यैतेयो रौहितेय इति स्यात्। अग्नायीति । 'अग्नेर्ढ'गिति वा 'सर्वत्राग्निकलिभ्यां ढक्-

उ.]त्वाज्जातेश्चेति पुंवत्त्वप्रतिषेधः स्यादत आह—परिगणनेति । भाष्ये—कठीत्वमिति । आकडारसूत्रे संज्ञाजातिकृदन्ततद्धितान्तसमस्तसर्वनामसङ्ख्याशब्दातिरिक्तशब्दस्यैव गुणवचनत्वोक्तेरिति भावः । ननु हस्तिनीशब्दात्समूहे ढकि यस्येति लोपे नस्तद्धित इति टिलोपे रूपसिद्धेः किं वचनेनेत्यत आह—यद्यत्रेति । छसा सहचरितस्येति । 'भवतष्ठक्छसा'वित्यस्य । रौहितेय इति । पुंवत्त्वेन ङीब्नकारयोर्निवृत्तेरिति भावः । न च 'भस्याऽढे तद्धित' इत्यत्र 'सिद्धश्च प्रत्ययविधा'वित्यर्थस्य 'बहुपूगे'त्यादिसूत्रस्थभाष्ये उक्तत्वेन प्रत्ययोत्पत्तेः पूर्वमेव पुंवत्त्वे 'स्त्रीभ्यो ढ'गित्यस्याऽप्रवृत्तौ 'रौहिति'रिति स्यादित्यापादनमुचितमिति वाच्यम् । दोषप्रतिपादने तात्पर्येण तदनपेक्ष्येदमुक्तमिति न दोष इत्याहुः । न च श्येतरोहितयोः शुभ्रादिषु पाठ इति कैयटाशयः, तथा सति श्येनीरोहिणीभ्यामपि लिङ्गविशिष्टपरिभाषया परत्वात्तस्यैव प्रवृत्तौ स्त्रियां यो ढो विहित इति सिद्धान्तेऽपि पुंवत्त्वापत्तौ श्यैनेयरौहिणेययोरसिद्धिरेव स्यादिति बोध्यम् । अग्नेरिति । नचास्य पुंस्यग्नित्वं प्रवृत्तिनिमित्तं,स्त्रियां त्वग्निसम्बन्ध इति प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कत्वाऽभावात्कथं पुंवत्त्वमिति वाच्यं,शक्यतावच्छेदकारोप एव लक्षणेत्यर्थस्य 'पुंयोगा-

१ 'यूतिः'।२ 'बह्वल्पार्थस्य शसि'। ३ 'पट्व्या भावः'। ४ 'मृद्व्या भावः'। ६ 'कठीभा'।

कौण्डिन्यः सापत्न इति ॥ यदि पुनरनपत्य इत्युच्येत ?॥ नैवं शक्यम् । इह हि न स्यात्—गार्ग्यायण्या अपत्यं माणवको गार्गो जाल्मः ॥ अस्तु तर्हि अढ इत्येव ॥ कथं कौण्डिन्यः सापत्न इति ? ॥*॥ कौण्डिन्ये निपातनात्सिद्धम् ॥*॥ [ कौण्डिन्ये निपातनात्सिद्धम् ]॥ किं निपातनम् ? ॥'आगस्त्यकौण्डिन्ययो'रिति ॥*॥ सापत्नः प्रकृत्यन्तरत्वात्॥*॥ सपत्नशब्दः प्रकृत्यन्तरमस्ति॥ कथमग्नायी देवता अस्य स्थालीपाकस्य आग्नेयः स्थालीपाक इति ?॥ अस्तु तर्ह्यनपत्य इत्येव ॥ कथं गार्गो जाल्मः ?॥ गार्ग्याग्नेयौ न संवदेते । कर्त्तव्यो-

---

प्र.] कव्य'इति वा ढक् । तत्र पुंवद्भावप्रतिषेधादाग्नायेय इति प्राप्नोति। कौण्डिन्य इति । कुण्डिन्या अपत्यं । गर्गादित्वाद्यञ् । तत्र पुंवद्भावे सति कौण्ड्य इति प्राप्नोति । सपत्नीशब्दादणि 'सापत' इति प्राप्नोति । यदि पुनरिति। 'अढे'इत्यपनीयाऽनपत्य इति उच्यमाने आग्नेय इत्यनपत्यत्वात् सिध्यति । श्यैतेयरौहिणेयकौण्डिन्यसापताश्चापत्यप्रत्ययान्तत्वात्सिध्यन्ति । गार्ग्यायण्या इति । 'गोत्रस्त्रियाः कुत्सने ण चे'ति णे अपत्यप्रत्यये पुंवद्भावो न प्राप्नोति । सपत्नशब्द इति। 'व्यन्स-

---

उ.] दाख्याया'मिति सूत्रभाष्ये उक्तत्वेनाऽदोषात्।गङ्गादिशब्दास्तु तटादिरूपं लक्षणमपि शास्त्रीयस्त्रीत्वविशिष्टमेवाभिदधतीति न कदाचिदपि ते भाषितपुंस्का इति दिक् । कौण्ड्य इतीति । पुंवत्त्वेन स्त्रीप्रत्ययनिवृत्तौ स्थानिवत्त्वाऽभावान्नस्तद्धित इति टिलोपापत्तिरिति भावः । सापत इतीति । अयं भावः,—सपत्नीशब्दस्य स्वामिपर्यायपतिशब्देन समानः पतिर्यस्या इति विग्रहे 'नित्यं सपत्न्यादिष्वि'ति साधुत्वं, स्वविवाहितपतिविवाहितद्वितीयादिस्त्रियामेव व्यन्तरूढिः । तेन नातिप्रसङ्गः । योगार्थमादाय च भाषितपुंस्कत्वनिर्वाहः । पुंसि तु सपतिरिति । तत्र शिवादौ सपत्नीशब्दपाठसामर्थ्यात्पुंवत्त्वेऽपि भूतपूर्वसपत्नीशब्दत्वमाश्रित्य पत्युत्तरपदण्यं बाधित्वाऽणि 'सापत्न' इत्येवेष्यते । 'सापत' इत्यनिष्टं प्राप्नोतीति । अस्याऽनिष्टत्वं च 'यदि पुनरनपत्य इत्युच्यते' इत्यग्रिमभाष्याल्लभ्यते । न हि तदा सापत इति कथमपि सिद्ध्यति । तन्न्यासे एतद्दोषानुपन्यासाच्चेति । पुंवद्भावो न प्राप्नोतीति । एवञ्च ष्फङीषोरनिवृत्तौ 'गार्ग्यायण' इति स्यादिति भावः । भाष्ये—सापत्नः प्रकृत्यन्तरत्वादिति । अन्या प्रकृतिर्यस्य स प्रकृत्यन्तरस्तत्त्वादित्यर्थः । एवञ्च सापत्नो न भवदुक्तसपत्नीशब्दप्रकृतिको येन दोषः स्यात्, किन्तु अन्यप्रकृतिक इति तात्पर्यम् । तत्प्रकृत्यन्तरमेवाह—सपत्नशब्दः प्रकृत्यन्तरमस्तीति । 'अण' इति शेषः । एवञ्च शिवादौ सपत्नेत्येव पठ्यत इति भावः । यत्तु स्त्रीप्रत्ययस्य प्रकृत्यन्तरमिति व्याचक्षते । तेषां लक्षणां विना यथाश्रुताक्षरैः साध्यहेत्वोः

---

१ 'च्यते' इदं भाष्यमवश्यम्भावी । २ इदं भाष्यम् । ४ कस्मिन्निदं व्याख्यास्योह्या ।

ऽत्र यत्नः ॥*॥ ठक्छसोश्च ॥*॥ ठक्छसोश्च पुंवद्भावो वक्तव्यः । भवत्याश्छात्राः भावत्काः भवदीयाः ॥ ठग्ग्रहणं किमर्थं न इके कृतेऽजादावित्येव सिद्धम् ?॥ नैवं शक्यम् ॥*॥ अजादिलक्षणे हि माथितिकादिवत्प्रसङ्गः ॥*॥ अजादिलक्षणे हि माथितिकादिवत्प्रसज्येत । तद्यथा—मथितं पण्यमस्य माथितिक इत्यकारलोपे कृते तान्तादिति कादेशो न भवति । एवमिहापि न स्यात् ॥ [तसिलादिष्वा कृत्वसुचः] ॥

## क्यङ्मानिनोश्च ॥ ६।३।३६ ॥

मानिन्ग्रहणं किमर्थम्?॥*॥मानिन्ग्रहणमस्त्यर्थमसमानाधिकरणार्थं च॥*॥ मानिन्ग्रहणं क्रियते ॥ [ किं प्रयोजनम् ? ] ॥ 'अस्त्यर्थमसमानाधिकरणार्थं च' । अस्त्यर्थं तावत्—दर्शनीयां मन्यते देवदत्तो यज्ञदत्तां दर्शनीयमान्ययमस्याः । असमानाधिकरणार्थम्—दर्शनीयां मन्यते यज्ञदत्ता[३] देवदत्तां दर्शनीयमानिनीयमस्याः ॥ [ क्यङ्मानिनोश्च ] ॥

प्र.]पत्ने'इति निर्देशोऽत्र लिङ्गं, तस्मादेव शार्ङ्गरवादिषु दृष्टान्ङीनि कृते सपत्न्या अपत्यमिति शिवाद्यणि पुंवद्भावे सापत्नः सिध्यति। कर्त्तव्योऽत्रेति । स्त्रियां यो ढो विहितः स्त्रीभ्यो ढगित्यनेन तत्र पुंवद्भावप्रतिषेधो न त्वग्नेर्ढगित्यस्मिन्निति व्याख्येयम् । ठक्छसोरिति। छसः सित्त्वात् तत्र 'सिति चे'ति पदसंज्ञाविधानाद्भत्वाऽभावाद्वचनम्। तान्तादिति कादेशो न भवतीति। ठस्येति वर्णमात्रस्य स्थानित्वेऽल्विधित्वात् स्थानिवत्त्वाऽभावात्।सङ्घातस्य तु स्थानित्वे संनिपातपरिभाषोपस्थानात्।

क्यङ्मा । मानिन्ग्रहणमिति । स्त्रीलिङ्गे समानाधिकरणे उत्तरपदे पूर्वेण सिद्धत्वात्।यथा दर्शनीयामात्मानं मन्यते दर्शनीयमानिनी देवदत्तेति। अत्र ह्येकस्या एव कर्मत्वात् कर्त्रीत्वाचाऽस्ति सामानाधिकरण्यम् । [ क्यङ्मानिनोश्च ] ॥

उ.]सामानाधिकरण्यालभः,हेतोःसार्थ्यैवृत्तित्वाऽलाभो वेति बोध्यम्।नन्वेवं सपत्न्या अपत्यमित्यर्थे सापत्नाऽसिद्धिरत आह—तस्मादेवेति। शार्ङ्गरवादीति। पूर्वपक्ष्युक्त-'सपत्नी'शब्दस्याद्युदात्तत्वात्तत्वकल्पनं । शिवाद्यणीति । लिङ्गविशिष्टपरिभाषयेति भावः । 'सापत्नो भ्राते'त्यादिप्रयोगास्तु औपचारिका बोध्याः । केचित्तु सपत्नीत्येव शिवादौ पाठः । भाष्यन्तु लक्षणया व्याख्येयम् । न च पूर्वपक्ष्युक्तसपत्नीशब्दादप्यणापत्तौ सापत्तापत्तिः, शिवादौ रूढस्यैव ग्रहणादिति वदन्ति । तन्न । तस्याऽपि स्त्रीविशेषे रूढेरवश्यं स्वीकर्तव्यत्वात् । अन्यथाऽतिप्रसङ्गः स्यात् । एवञ्च ततोऽपि शिवाद्यणापत्तौ सापत्तापत्तेर्दुर्वारत्वात्।तस्माच्छिवादौ सपत्न इति भिन्ना प्रकृतिरेव पठ्यते न तु सपत्नीतीत्येव भाष्याशयः।स्त्रियां यो ढ इति।'अढे'इत्यत्रसूत्रस्थं

१ इदं भाष्यमित्यन्ये । २ इदं क्वचिन्न स्यात् । ३ देवदत्ता यज्ञदत्तां । ४ क्वचिन्न ।

## न कोपधायाः ॥ ६।३।३७ ॥

किमिदमेवमाद्यनुक्रमणमाद्यस्य योगस्य विषये, आहोस्वित्पुंवद्भावमात्रस्य ? ॥ किं चातः ?॥ यद्याद्यस्य योगस्य विषये, माध्यमिकीयः शालूकिकीयः—अत्र न प्राप्नोति ॥ विधिरप्यत्र न सिध्यति ॥ किं कारणम् ? ॥ भाषितपुंस्कादनूङित्युच्यते न ह्येतद्भाषितपुंस्कादनूङ् ॥ इह तर्हि विलेपिकाया धर्म्यं वैलेपिकम् । विधिश्च सिद्धो भवति, प्रतिषेधश्च न प्राप्नोति ॥

अथ पुंवद्भावमात्रस्य विषये,—हस्तिनीनां समूहो हास्तिकं,जातिलक्षणःपुंवद्भावप्रतिषेधः प्राप्नोति॥एवं तर्हि 'न कोपधाया' इत्येष योगः पुंवद्भावमात्रस्य [विषये । तत ] उत्तरमेवमाद्यनुक्रमणमाद्यस्य योगस्य विषये ॥

॥*॥कोपधप्रतिषेधे तद्धितवुग्रहणम् ॥*॥ कोपधप्रतिषेधे तद्धितवुग्रहणं कर्त्तव्यम् । तद्धितस्य यः ककारो, वोश्च यः ककारस्तस्य ग्रहणं कर्त्तव्यम् । इह मा भूत्—पाकभार्यः भेकभार्यः ॥ [ न कोपधायाः ] ॥

प्र.] न कोप । आद्यस्येति । पाणिनिपठितसूत्रत्रयस्येत्यर्थः। पुंवद्भावमात्रस्येति । औपसङ्ख्यानिकस्यापीति यावत् । माध्यमिकीय इति । मध्यमिकायां भव इति 'वेणुकादिभ्यश्छण्वक्तव्य' इति च्छण् प्रत्ययः । तत्र 'भस्याऽढ' इति पुंवद्भावप्रसङ्गः । शालूकिकीय इति । शालूकानि विद्यन्तेऽस्यामिति वुञ्छण्केति कः । शालूकिकायां भव इति 'वृद्धादकेकान्तखोपधा'दिति च्छः।विधिरपीति। नगर्यां ग्रामे चाऽभाषितपुंस्कत्वात् । वैलेपिकमिति । 'अण्महिष्यादिभ्य' इत्यण् । एवं तर्हीति । प्रयोगमूलव्याख्यानाद्यथेष्टविषयविभागलाभः । पाकभार्य इति । 'पाक'शब्दः प्रथमवयोवाची । ततो ङीबपवादोऽजादित्वाट्टाप् । भेकभार्य इति । भेकशब्दः क्रियाशब्दः । मण्डूकजातिवाचित्वे तु भेकीभार्य इति भाव्यम् । 'जातेश्चे'ति पुंवद्भावनिषेधात् । [ न कोपधायाः ] ॥

उ.]स्त्रियामित्यनुवर्त्त्य आवर्त्त्य च स्वरित्वगुणयुक्तत्वं वाश्रित्य स्त्रीतिशब्दमुच्चार्य विहितडस्यैव ग्रहणादेतदर्थलाभ इति भावः । [ क्यङ्मानिनोश्च ] ॥

न कोपधायाः । औपसङ्ख्यानिकस्यापीति । तस्यापि यथा कथञ्चित्सूत्रेण सङ्ग्रहादिति भावः । अनेन वार्तिकानामपि सूत्रानुमतत्वं दर्शयति । पुंवद्भावप्रसङ्ग इति । एवञ्चेकारश्रवणं न स्यादिति भावः । नगर्यामिति । मध्यमिका—नगरी । शालूकिका—ग्रामः । वार्तिकेऽपि सूत्रतो भाषितपुंस्कादनूङ इत्यस्यानुवृत्तेरिति भावः । क्रियाशब्द इति । भययुक्तो भेक इत्यर्थः । भेका भार्या यस्येति विग्रहः । [न कोपधायाः] ॥

१ 'क्रमणं क्रियते आद्यस्य' । २ 'द्वयमाम' । ३ इदं क्वचिन्न । ४ 'चाश्रित्य'।

## स्वाङ्गाच्चेतः ॥ ६।३।४० ॥

॥*॥ स्वाङ्गाच्चेतोऽमानिनि ॥*॥ स्वाङ्गाच्चेतोऽमानिनीति वक्तव्यम्। इहापि यथा स्यात्—दीर्घमुखमानी श्लक्ष्णमुखमानी॥यद्यमानिनीत्युच्यते दीर्घमुखमानिनी श्लक्ष्णमुखमानिनीति न सिध्यति॥'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवती'त्येवं भविष्यति ॥ [ स्वाङ्गाच्चेतः] ॥

## पुंवत्कर्मधारयजातीयदेशीयेषु ॥ ६।३।४२ ॥

[कर्मधारयजातीयदेशीये] किमर्थमिदमुच्यते न सामान्येन सिद्धम्॥*॥ पुंवत्कर्मधारये प्रतिषिद्धार्थम् ॥*॥ प्रतिषिद्धार्थोऽयमारम्भः। 'न कोपधाया' इत्युक्तं तत्रापि पुंवद्भावो भवति ॥ कारिका वृन्दारिका कारकवृन्दारिका। कारकजातीया कारकदेशीया। 'संज्ञापूरण्योश्चे'त्युक्तं तत्रापि पुंवद्भवति; दत्ता वृन्दारिका दत्तवृन्दारिका। दत्तजातीया दत्तदेशीया।पञ्चमी वृन्दारिका पञ्चमवृन्दारिका। पञ्चमजातीया पञ्चमदेशीया। 'वृद्धिनिमित्तस्ये'त्युक्तं तत्रापि पुंवद्भावो भवति। स्रौघ्नी वृन्दारिका स्रौघ्नवृन्दारिका। स्रौघ्नजातीया स्रौघ्नदेशीया। 'स्वाङ्गाच्चेतोऽमानिनी'त्युक्तं। तत्रापि पुंवद्भवति। श्लक्ष्णमुखी वृन्दारिका श्लक्ष्णमुखवृन्दारिका। श्लक्ष्णमुखजातीया श्लक्ष्णमुखदेशीया। 'जातेश्चे'त्युक्तं, तत्रापि पुंवद्भवति। कठी वृन्दारिका कठवृन्दारिका। कठजातीया। कठदेशीया ॥*॥ कुक्कुट्यादीनामण्डादिषु पुंवद्वचनम् ॥*॥ कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः। कुक्कुट्या अण्डं कुक्कुटाण्डम्। मृग्याः पदं मृगपदम्। काक्याः शावः काकशावः॥*॥ न वाऽस्त्रीपूर्वपदविवक्षितत्वात्॥*॥ न वा वक्तव्यम् ॥ किं कारणम् ?॥ 'अस्त्रीपूर्वपदविवक्षितत्वात्'। नाऽत्र स्त्री पूर्वपदं विवक्षितं॥ किं तर्हि?॥अस्त्री पूर्वपदं[विवक्षितम् ]।उभयोरण्डमुभयोः

प्र.] पुंवत्। किमर्थमिति। कर्मधारये 'स्त्रियाः पुंव'दिति सिद्धः पुंवद्भावो,जातीयदेशीययोरपि तसिलादिष्विति मत्वा प्रश्नः। प्रतिषिद्धार्थमिति। प्रतिषिद्धोऽपि पुंवद्भावो यथा स्यादित्येवमर्थम्। न वेति। पुमान् वृत्तिवाक्यविषयः। स्त्रियां तु

उ.] स्वाङ्गाच्चेतः। दीर्घमुखमानिनीति। प्रातिपदिकत्वतद्व्याप्यधर्माणां स्त्रीप्रत्ययसमभिव्याहारे विशिष्ट एव पर्याप्त्या मानिन्शब्दस्योत्तरपदत्वाऽभावादसिद्धिरिति भावः। तर्हि तेनैव न्यायेन मानिन्शब्दत्वमपि विशिष्टे इत्याह—प्रातिपदिकग्रहण इत्यादि। 'यतो यो विहितस्तद्विशिष्टस्यैव तेन ग्रहण'मिति तु न नियम इति भावः।

पुंवत्कर्म। प्रतिषिद्धविषयेऽर्थः प्रयोजनं यस्येति भाष्यार्थ इत्याह—प्रतिषिद्धोऽपीति। ननु सतो विवक्षाया एव प्रकृतत्वादसतश्चेत्यादिप्रकृताऽनुपयुक्त

१ 'किमर्थमिदमुच्यते' इत्येव कचित्पाठः। ...पुंवद्भवति। ...क्वचिन्न। ४ 'दण्डः'।

पदमुभयोः शावः॥ यद्यपि तावदत्रैतच्छक्यते वक्तुम्,इह तु कथं-मृग्याः क्षीर मृगक्षीरमिति?॥ अत्रापि 'न वाऽस्त्रीपूर्वपदविवक्षितत्वा'दित्येव॥ कथं पुनः सतो नामाऽविवक्षा स्यात्?॥सतोऽप्यविवक्षा भवति। तद्यथा अलोमिकैडका, अनुदरा कन्येति। असतश्च विवक्षा भवति। तद्यथा–समुद्रः कुण्डिका,विन्ध्यो वर्द्धितकमिति ॥*॥ अग्नेरीत्वाद्वरुणस्य वृद्धिर्विप्रतिषेधेन ॥*॥ अग्नेरीत्त्वाद्वरुणस्य वृद्धिर्भवति विप्रतिषेधेन। अग्नेरीत्त्वस्यावकाशः–अग्नीषोमौ। वरुणस्य वृद्धेरवकाशः–वायुवारुणम्। इहोभयं प्राप्नोति–आग्निवारुणीमनड्वाहीमालभेत। वरुणस्य वृद्धिर्भवति विप्रतिषेधेन॥ नैष युक्तो विप्रतिषेधः। द्विकार्ययोगो हि विप्रतिषेधो, नचाऽत्रैको द्विकार्ययुक्तः॥ कथम्?॥ 'अग्नेरीत्त्वं, वरुणस्य वृद्धि'रिति॥ नावश्यं द्विकार्ययोग एव विप्रतिषेधः॥ किं तर्हि?॥ असंभवोऽपि। स चाऽत्रास्त्यसंभवः॥ कोऽसावसंभवः?॥ अग्नेरीत्त्वमभिनिर्वर्तमानं वरुणस्य वृद्धिं बाधते। वरुणस्य च वृद्धिरभिनिर्वर्तमानाऽग्नेरीत्त्वं बाधते। एषोऽसंभवः। सत्यसंभवे युक्तो विप्रतिषेधः॥*॥ पुंवद्भावाद्ध्रस्वत्वं खिद्धादिकेषु॥*॥ पुंवद्भावाद्ध्रस्वत्वं भवति विप्रतिषेधेन खिद्धादिकेषु। पुंवद्भावस्याऽवकाशः–पटुभार्यः मृदुभार्यः।खिति ह्रस्वत्वं भवतीत्यस्यावकाशः

प्र.]वाक्यमेव भवति। वृत्तिस्त्वनभिधानान्न भवति। इह तु कथमिति। नहि पुंसा क्षीरस्य संबन्धसंभवः। अत्रापीति। जात्यन्तरनिवृत्तिपरायां चोदनायां स्त्रीत्वमनुपकारित्वादविवक्षितमित्यर्थः। यत्र तु लिङ्गविशेष उपकारकस्तत्रासौ विवक्ष्यत एव यथा'ऽजामूत्रेण पर्युक्षितं दातव्य'मिति। असतश्चेति। विवक्षाया एव बलीयस्त्वमित्यनेन प्रतिपद्यते। समुद्रः कुण्डिकेति। असदेव समुद्रत्वं कुण्डिकायामसत् कुण्डिकात्वं समुद्रे वाऽऽरोप्य शब्दप्रयोगः।वायुवारुणमिति। उभयत्र 'वायोः प्रतिषेधो वक्तव्य'इत्यानङ् भवति।वायुवरुणौ देवताऽस्य। सास्य देवतेत्यण्। देवताद्वन्द्वे चेत्युभयपदवृद्धिः। आग्निवारुणीमिति। नन्वीत्वमन्तरङ्गं, बहिरङ्गा तूत्तरपदवृद्धिस्तद्धितापेक्षणादित्ययुक्तो विप्रतिषेधः। नैतदस्ति। इद्वृद्धावितीत्त्वस्यापवाद इत्त्वं विधीयते, ततोऽपवादविषयापेक्षणान्नास्त्यन्तरङ्गत्वमीत्त्वस्याऽत्र विषये। वरुणस्य वृद्धिमिति। 'दीर्घाच्च वरुणस्ये'तिनिषेधात्। ईत्वं बाधत इति। 'इद्वृद्धा'विति

उ.]मत आह–विवक्षाया एवेति। नतु वस्तुसत्पदार्थसत्ताया इति भावः। ईदग्नेरिति ईत्त्वस्यापवाद इद्वृद्धाविति इत्त्वमित्यन्वयः। ततोऽपवादेति। अपवादविषयप्रकल्पनेनोत्सर्गप्रवृत्त्याऽत्र विषये ईत्त्वस्य प्रथममप्रवृत्तेर्नान्तरङ्गत्वमिति भावः। भाष्येऽग्नीषोमावित्यवकाशप्रदर्शनमुपलक्षणम्, अग्नीवरुणावित्यवकाशो बोध्यः।

१ इदं क्वचित्। २ मात्रेका। ३ निवर्तमानं। ४ इत्त्वे'। आगादिति शेषः।

कालिंमन्यः हरिणिंमन्यः। इहोभयं प्राप्नोति—कालिंमन्या हरिणिंमन्या। ह्रस्वो भवति विप्रतिषेधेन। 'घादिषु नद्या ह्रस्वो भवती'त्यस्यावकाशः—नर्तकितरा नर्तकितमा। पुंवद्भावस्याऽवकाशः—दर्शनीयतरा दर्शनीयतमा। इहोभयं प्राप्नोति पद्वितरा—पद्वितमा। ह्रस्वो भवति विप्रतिषेधेन। 'के ह्रस्वो भवती'त्यस्यावकाशः—नर्तकिका। पुंवद्भावस्यावकाशः—दारदिका। इहोभयं प्राप्नोति पद्विका मृद्विका। ह्रस्वत्वं भवति विप्रतिषेधेन॥ अथेदानीं ह्रस्वत्वे कृते पुनः प्रसङ्गविज्ञानात्पुंवद्भावः कस्मान्न भवति? । 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति॥ [ पुंवत्कर्मधारय ]॥

घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः॥ ६।३।४३॥

ङीग्रहणं किमर्थम्? ॥ 'अनेकाचो ह्रस्व' इतीयत्युच्यमाने खट्वातरा मालातरा—अत्रापि प्रसज्येत॥ नैतदस्ति प्रयोजनम्। भाषितपुंस्कादिति वर्त्तते॥ एवमपि दत्तातरा गुप्तातरा—अत्रापि प्राप्नोति॥ 'ईत' इति वर्त्तते॥ [ क्व प्रकृतम्? ॥ 'स्वाङ्गाच्चेतोऽमानिनी'ति ] ॥ एवमपि—ग्रामणीतरः सेनानीतरः—अत्रापि प्राप्नोति॥ स्त्रियामिति वर्त्तते॥ एवमपि—ग्रामणीतरा सेनानीतरा—अत्रापि प्राप्नोति। स्त्रियाः स्त्रियामिति वर्त्तते॥ शेषप्रक्लृप्त्यर्थं

प्र.]वचनात्। कालिंमन्य इति। कालीमात्मानं मन्यते। काल्येवाहमिति मन्यत इत्यर्थः। नर्त्तकितरेति। अत्र 'न कोपधाया' इति पुंवद्भावः प्रतिषिद्धः। दारदिकेति। दरदोऽपत्यं स्त्री। 'द्व्यञ्मगधे'त्यण्। तस्याऽतश्चेति लुक्। ततः 'प्रागिवात्क' इति कः। 'तसिलादिष्वि'ति पुंवद्भावः। ननु परिगणितास्त्रतसिलादयो, न च कप्रत्ययः परिगणितः। एवं तर्हि विप्रतिषेधाऽभिधानात्कप्रत्ययोऽपि तत्राभ्युपगत इत्यनुमीयते, तेनासौ परिगणितः। [ पुंवत्कर्मधारय ] ॥

घरूप। ईत इति वर्त्तत इति। 'स्वाङ्गाच्चेत' इत्यतः। स्त्रियाः स्त्रियामिति

उ.]कालिंमन्य इति। स्त्रीलिङ्गोत्तरपदत्वाऽभावात्पुंवत्त्वाऽप्राप्तिः। कालिंमन्य इत्यस्य कालीं स्वप्रियात्वेन मन्यते इत्यर्थे वैयधिकरण्यात्पुंवत्त्वाऽप्राप्तेरुदाहरणे सामानाधिकरण्यं दर्शयति—कालीमात्मानमिति। अत्र न कोपेति। नर्तकिकेत्यत्रापेत्यद्बोध्यम्। विप्रतिषेधाभिधानादिति। दारदिकेत्यवकाशप्रदर्शनात्, पद्विकेत्युदाहरणादित्यपि बोध्यम्। तेन नासाविति। तेनास्यात्यल्पविषयता सूच्यते इति भावः।

घरूप। ननु ग्रामणीशब्दस्यापि स्त्रीवाचकतया षष्ठ्यन्तस्त्रिया इत्यस्यानुवृत्तौ कथमतिप्रसङ्गनिवृत्तिरत आह—तेनेति। नन्वसत्यपि ङीग्रहणे एकाजुप-

१ अयं पाठः क्वचिन्न। २ 'दित्युच्यते'।
३ 'अमानिनी'ति क्वचिन्न। ४ तेन नासौ।

तर्हि ङीग्रहणं कर्त्तव्यम् । 'नद्याः शेपस्यान्यतरस्या'मिति ॥ कश्च शेपः ? ॥ अङी च या नदी, ङ्यन्तं च यदेकाच् । अन्तरेणापि ङीग्रहणं प्रक्लृप्तः शेपः॥ कथम् ? ॥ 'ईत' इति वर्त्तते । अनीच्च या नदी, ईदन्तं चापि यदेकाच् ॥

शेपग्रहणं चापि कर्त्तुमशक्यम्॥ कथम्?॥अविशेषेण घादिषु नद्या अन्यतरस्यां ह्रस्वत्वमुत्सर्गः । तस्याऽनेकाचो नित्यं ह्रस्वत्वमपवादः । तस्मिन्नित्ये प्राप्ते उगितो विभाषाऽऽरभ्यते ॥ यद्येवं—लक्ष्मितरा तन्त्रितरा—इति न सिध्यति । लक्ष्मीतरा तन्त्रीतरेति प्राप्नोति ॥ इष्टमेवैतत्संगृहीतं लक्ष्मीतरा तन्त्रीतरेत्येव भवितव्यम् । एवं हि सौनागाः पठन्ति—'घादिषु

प्र.]वर्त्तत इति।तेन स्त्रीवाचिनईकारस्य ह्रस्वो विधीयमानो ग्रामणीशब्दस्य न भविष्यत्यनर्थकत्वादीकारस्य। शेपप्रक्लृप्त्यर्थमिति। विशिष्टस्य शेषस्य प्रक्लृप्त्यर्थमित्यर्थः। अनीच्च या नदीति। ब्रह्मबन्धुतरा ब्रह्मबन्धूतरेति।ईदन्तं चेति। स्त्रितरा स्त्रीतरेति। अविशेषेणेति।'ईतोऽनेकाच'इति विशेषानाश्रयात्। यद्येवमिति।यदीत इत्यनुवृत्त्या ङीग्रहणं शेषग्रहणं च प्रत्याख्याय स्त्रिया इत्यनेनेकारो विशेष्यते तदा लक्ष्मीतन्त्र्योरीकारःस्त्रियां न विहित इति नित्यह्रस्वत्वं नास्ति । 'नद्या अन्यतरस्या'मित्यत्रापि 'स्त्रिया'इत्यनुवर्तनाद्ध्रस्वत्वं नास्ति।सति त्विह ङीग्रहणे 'स्त्रिया' इत्यस्य प्रयोजनाऽभावादनुवृत्त्यभावान्नद्याः शेषस्येत्यनेन ह्रस्वः सिध्यतीति भावः । इष्टमिति । सति इह ङीग्रहणे'नद्याः शेषस्ये'ति विकल्पेन प्राप्तं ह्रस्वत्वं वचनेनप्रतिषेध्यम्।असति तु ङीग्रहणे स्त्रिया इत्यस्य सूत्रद्वयेप्यनुवृत्त्या ह्रस्वस्याऽप्रसङ्गः कृतिस्त्रया इति नास्ति लक्ष्यभेद इति सिद्धं सर्वमिष्टम्।। इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठस्या-

उ.]शेषप्रक्लृप्तिः सिद्धैव, उपयुक्तादन्यस्य शेषत्वादत आह—विशिष्टस्येति । तच्च—अङी च या नदीत्यादिना भाष्ये दर्शितम् । भाष्ये 'ङी'ग्रहणं विनाऽपि शेषप्रक्लृप्तिं प्रदर्श्य शेषग्रहणमपि च न कार्यमित्याह—शेपग्रहणञ्चापीति । 'ङी'ग्रहणं 'च' शब्दार्थः। तस्याऽनेकाच इति । 'स्त्रियां विहितेकारान्तस्ये'ति शेषः । नन्वेवमुगितश्चेत्यस्यापि नित्यं ह्रस्वत्वमपवादः स्यादेवञ्च विदुषितरेत्यादौ विकल्पानापत्तिरत आह भाष्ये—तस्मिन्नित्ये प्राप्ते इति । उगितः परनद्यन्तस्यैकाचोऽसंभवेन तस्याऽचारितार्थ्यादिति भावः । उगितो विभाषेयमिति । उगित्परनदीसंबन्धिनीत्यर्थः । ईकारो विशेष्यत इति । ग्रामणीतरेत्यादावतिप्रसङ्गवारणायेति भावः । स्त्रियां न विहित इति । 'अवितृस्तृ' इत्यादेः स्त्रियामित्यधिकृत्याऽविधानात्। शब्दशक्त्या तु तयोः स्त्रियां वृत्तिरिति भावः। प्रयोजनाऽभावादिति। स्त्रियामित्यधिकृत्य ङीबादेर्विधानेन व्यभिचाराऽभावादिति भावः । भाष्ये 'इति

१ 'ग्रहणमपि' । २ 'तस्यानेकाच इति नित्यं'।'अस्यानेकाचो'। ३ 'विभाषेयमार'।

नद्या ह्रस्वत्वे कृन्नद्याः प्रतिषेध' इति ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याऽध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥ ६।३।२॥

आन्महतः समानाधिकरणजातीययोः ॥ ६।३।४६ ॥

इह कस्मान्न भवति—अमहान् महान्संपन्नो महद्भूतश्चन्द्रमा इति ? ॥ ॥*॥ अन्यप्रकृतिर्[२]महान्भूतप्रकृतौ महान्महत्येव ॥*॥ अन्यो—[३]महान् । अन्योऽ-महान्भूतप्रकृतौ वर्त्तते, महान्महत्येव । ॥*॥ तस्मादात्त्वं न स्यात् ॥*॥

उ.]ध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥ ६।३।२ ॥

आन्महतः समानाधिकरणजातीययोः । महद्भूत इति । महच्छब्दो भूत-शब्दश्चैकस्मिन्नर्थे चन्द्रादौ वर्त्तते इति सामानाधिकरण्यादात्त्वं प्राप्नोति । अन्य-प्रकृतिरिति। अन्यस्य—महतः,प्रकृतिः—कारणम्—अन्यप्रकृतिरमहान्। भूतप्रकृता-विति। भूतशब्दस्य प्रकृतिः कारणमर्थः।अर्थप्रतिपादनाय शब्दोचारणाच्छब्दस्यार्थः कारणमुच्यते । तदयमर्थो,—भूतशब्दार्थे महान् वर्त्तते । अमहतो भूतेन सामाना-धिकरण्यं न तु महत इत्यर्थः । महान्महत्येवेति । महच्छब्दो महत्येव वर्त्तते नतु भूतार्थे।च्विविषये हि प्रकृतिः कर्त्री न विकृतिः। तथाहि सङ्घीभवन्ति ब्राह्मणाः, पटीभवन्ति तन्तव इति प्रकृतिसङ्ख्याश्रयं वचनं दृश्यते न विकृतिसङ्ख्याश्रयम्। तथा अत्वं त्वं संपद्यते त्वद्भवतीति प्रकृत्याश्रयः प्रथमपुरुषो भवति, न विकृत्या-

उ.]प्राप्नोती'त्यस्य इत्येव प्राप्नोतीत्यर्थः। सूत्रद्वयेऽपीति।'घरूपे'त्यत्र 'नद्या अन्य-तरस्या'मित्यत्र च। एवञ्च ङीग्रहणप्रत्याख्याने शेषग्रहणं 'कृन्नद्या' इति च न वक्तव्य-मिति महल्लाघवमिति भावः।इति प्रदीपे षष्ठस्य तृतीये पादे द्वितीयमाह्निकम्॥६।२।२॥

आन्महतः । महच्छब्द इति । इह प्रकृतिविकृत्योरभेदाध्यासविषये 'सुवर्णं कुण्डले भवत' इत्यादौ विकारस्य प्राधान्येन क्रियासम्बन्धो दृश्यते। प्रकृतेस्तु गुणभावेन । तथा प्रकृतेऽपि महदर्थस्य भवनकर्तृत्वेन प्राधान्यतस्तत्र क्रियासम्बन्धान्महद्भूतशब्दयोः सामानाधिकरण्यादात्त्वप्राप्तिरिति प्रश्न इति भावः। कारणमर्थ इति। कर्तृरूपोऽर्थ इत्यर्थः। तत्राऽमहान् शब्दो वर्तत इति भाष्याक्षरार्थः।

अन्यप्रकृतिरिति वार्तिकस्थमन्यशब्दं व्याचष्टे—भाष्ये—अन्यो महानिति। अमहतस्तत्प्रकृतित्वोपपादनायाह—अन्योऽमहानिति । महत्येवेति । नतु भूतप्रकृ-ताविल्यर्थः । महत्त्वरूपेण भूत इत्यर्थावगमादिति भावः । कुतः पुनरयं नियमोऽत आह—च्विविषये हीति । अन्यत्र विकृतेः कर्तृत्वेऽपि शब्दशक्तिस्वाभाव्याच्वि-विषये प्रकृतेरेव कर्तृत्वमिति भावः । तत्र मानान्तरमप्याह—तथाहीति । सङ्घी-भवन्तीति । असङ्घो ब्राह्मणाः सङ्घः संपद्यते इत्यर्थः । नन्वत्र विकृतेः कर्तृत्व-

१ लोकमासिकम् । २ त्वमहान् । ३ अन्योऽमहान् । ४ अन्यो महान् ।

तस्मादात्त्वं न भविष्यति ॥*॥ पुंवत्तु कथं भवेदत्र ॥*॥ पुंवद्भावोऽपि तर्हि न प्राप्नोति। अमहती महती संपन्ना महद्भूता ब्राह्मणी॥एवं तर्हि॥*॥अमहति महान् हि वृत्तस्तद्वाची चात्र भूतशब्दोऽयम् ॥*॥ अमहति हि महच्छब्दो वर्त्तते, तद्वाची चाऽत्र भूतशब्दः प्रयुज्यते ॥ किंवाची ? ॥ महद्वाची ॥

प्र.]अयो मध्यमपुरुषः।ततश्च भूत इति निष्ठाप्रत्ययो भवनक्रियायाःकर्तर्यमहत्युत्पन्नो न तु विकारे महति। पुंवत्त्विति। वैयधिकरण्यादात्त्ववत्पुंवद्भावोऽपि न प्राप्नोति। यथा च प्रकृतेः कर्तृत्वं दृश्यते तथा विकृतेरपि। 'सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवत' इति विकारसङ्ख्याश्रयद्विवचनदर्शनात्। तथा'क्लृपि संपद्यमाने चतुर्थी'ति विकाराच्चतुर्थी दृश्यते न प्रकृतेः। 'मूत्राय संपद्यते यवागूः' 'उच्चाराय कल्पते यवान्न'मिति। तथा'असङ्घो ब्राह्मणाः सङ्घः संपद्यते' 'अपटस्तन्तवः पटः संपद्यते' इति विकारसङ्ख्याश्रयं वचनं दृश्यते। तत्र यदि महद्भूतेत्यत्र सामानाधिकरण्यमाश्रित्य पुंवद्भावो विधीयते तदा गोमतीभूतेत्यत्रापि प्राप्नोति। आत्वप्रसङ्गश्च। तत्र पुंवद्भावं तावत्साधयितुमाह—एवं तर्हीति। अमहत्यर्थे महच्छब्दो वर्तत इति भूतशब्दसामानाधिकरण्ये पुंवद्भावो भवतीत्यर्थः। महद्वाचीति। अयं भावः,—च्व्यन्तोऽत्र महच्छब्दः। च्विप्रत्ययस्य यदा प्रकृतिर्विकाररूपतामापद्यमाना विवक्ष्यते तदोत्पद्यते, परिणामविषयत्वाच्च्विप्रत्ययस्य। यदा चैकोऽर्थः प्रकृतिविकारात्मकतया आश्रीयते तदा परिणामव्यवहारो भवति। यथोक्तम्—'जहद्धर्मान्तरं पूर्वमुपादत्ते यदा परम्। तत्त्वादप्रच्युतो धर्मी परिणामः स

उ.]माश्रित्य पुंवद्भावः सुलभ इति शङ्कते—यथा चेत्यादिना। 'सङ्घीभवन्ती'त्यादौ। क्लृपि संपद्यमान इति। तेन संपत्तिक्रियाकर्तरि विधीयमाना चतुर्थी विकारादेवोत्पद्यत इति विकारस्यैव संपत्तिकर्तृत्वमावेदयते इत्यर्थः। उत्तरयति—तत्र यदीति। आत्वप्रसङ्गश्चेति। 'महद्भूतश्चन्द्रमा' इत्यत्र। यदि वैयधिकरण्याश्रयेण आत्ववारणं तदा पुंवत्त्वाऽप्रसक्तिरिति सेयमुभयतः स्पाशेति भावः।तावदिति। पुंवद्भावे दोषपर्यवसानात्प्रथमं तमेव परिहरतीत्यर्थः। अमहत्यर्थे इति। अनेन च्विविषये प्रकृतिविकृत्योरभेदस्यैव विवक्षणान्महच्छब्दस्यापि गौण्या वृत्त्याऽमहद्बोधकतया तस्य च कर्तृत्वात्सामानाधिकरण्याश्रयपुंवत्त्वसिद्धिरिति भावः। ननु 'महद्वाची'त्युक्तं, च्व्यन्ते प्रकृतेरेव कर्तृत्वादत आह—अयं भाव इति। विवक्ष्यते तदोत्पद्यत इति। 'कृष्णीभूत' इत्यादौ तादृशावस्थाया एवातीतत्वप्रतिपत्तेः। द्व्यात्मकतयेति। प्रकृतिविकारात्मकतयेत्यर्थः। क्वचित्तु तथैव पाठः। जहद्धर्मान्तरमिति।क्षीरावस्थायां विद्यमानं धर्मं द्रवत्वादिकं जहत्—नतु त्यक्तवान्, किंचिद-

१ श्लोकवार्त्तिकम्। २ इदं क्वचिन्न। ३ मूलवाक्योऽयं। ४ 'द्व्यात्मकतया'।

॥*॥तस्मात्सिध्यति पुंवत् ॥*॥ तस्मात्सिध्यति पुंवद्भावः ॥ यद्येवमात्त्वमपि प्राप्नोति—महद्भूतश्चन्द्रमा[इति]॥*॥ निवर्त्यमात्त्वन्तु मन्यन्ते ॥*॥ [निवर्त्य-

प्र.]उच्यते' इति।यदा तूत्तरावस्था पूर्वावस्था वा नाश्रीयते तदा च्वेरभावः।'तन्तवो भवन्ति' 'पटो भवती'ति। उक्तं च हरिणा—'पूर्वावस्थामविजहत्संस्पृशद्धर्ममुत्तरम्। संमूर्च्छित इवार्थात्मा जायमानोऽभिधीयते'॥ इति॥ तत्र विकारस्य कर्तृत्वाद्भूतशब्देन सामानाधिकरण्यात्सिद्धः पुंवद्भावः। निवर्त्यमिति। पुंवद्भाववदात्त्वस्यापि प्रसङ्गात्। तदत्र क्व चित्सामानाधिकरण्यं क्व चिद्वैयधिकरण्यमाश्रित्य प्रयोगाः समर्थ्यन्ते। 'महद्भूते'त्यत्र विकारभागः कर्तृत्वेनाश्रीयते। 'गोमतीभूते'त्यत्र तु प्रकृतिभागः। 'महद्भूतश्चन्द्रमा' इत्यत्रापि प्रकृतिभागः। 'सङ्घीभवन्ति ब्राह्मणा' इत्यादौ तु प्रकृतेरेव कर्तृत्वम्। च्व्यन्तस्य गतित्वाद्गतीनां च क्रियाविशेषकत्वात्सङ्घीभवनलक्षणायां विशिष्टायां क्रियायां ब्राह्मणानां कर्तृत्वात्। 'सङ्घः संपद्यते' इत्यादौ तु वाक्ये जन्ममात्रस्य सङ्घः कर्त्ता। यथा 'व्याकरणस्य सूत्रं करोती'ति करोतिमात्रस्य सूत्रं कर्म। 'व्याकरणं सूत्रयती'त्यत्र सूत्रविशिष्टस्य करोतेर्व्याकरणम्। एवमिहापि प्रकृतिविकृत्योर्भिन्नक्रियाविषयं कर्तृत्वम्। तेन वृत्तौ प्रकृतिसञ्ज्ञाश्रयं वचनमेवं महद्भूतशब्दः प्रकृतेरेव कर्तृत्वमवगमयितुं शक्तो, मह-

उ.]न्वयात्।परं—दध्यवस्थायामवस्थितं धर्मम्।एवञ्च धर्मस्यैव त्यागोपादाने,धर्मी त्ववस्थित एवेति भावः। तदाह—तत्त्वादिति। स्वस्वरूपादित्यर्थः। पूर्वावस्थामिति। पूर्वां कारणावस्थामविजहदुत्तरं धर्ममवस्थाविशेषरूपमासादयन् संमूर्छित इवोभयरूपतयाऽध्यवसीयमानो जायमानोऽर्थाऽऽत्मा च्व्यन्तेनाभिधीयत इत्यर्थः। एवञ्चैकस्यैव वस्तुनः पूर्वोत्तरावस्थोपाधिव्यवच्छिन्नत्वात्प्रकृतिविकृत्योरुभयोरपि कर्तृत्वमुपपद्यत इति भावः। उभयोः कर्तृत्वेऽपि वचनं प्रकृतिसञ्ज्ञाश्रयं, पुस्त्वोऽपि प्रकृत्याश्रय एवेति बोध्यम्। शब्दशक्तिस्वभावात्। केचित्तु यतो महान्महच्छब्दस्तादर्थ्येनाऽमहति वर्ततेऽतो भूतशब्दो महद्वाची महच्छब्दसमानाधिकरणः,तस्याप्यमहदर्थकत्वादिति भाष्यार्थमाहुः। 'निवर्त्यमात्व'मिति वार्तिकमवतारयति—भाष्ये—यद्येवमिति। 'इत्याहे'ति वाक्यशेषः। तमेवार्थं वार्तिके वाक्यशेषपूरणेन स्पष्टयति—आत्वमपीत्यादिना। भाष्योक्तप्रकारादन्यप्रकारेण सर्वेष्टलक्ष्यसिद्धिं परोक्तामनूद्य दूषयति—तदत्र क्वचिदिति। 'असङ्घः संपद्यते' 'सङ्घीभवन्ति ब्राह्मणा' इति वाक्यवृत्त्योर्वैषम्यमुपपादयति—सङ्घीभवन्तीति। 'व्याकरणं सूत्रयती'त्यस्य व्याकरणं सूत्ररूपेण करोतीत्यर्थः। सूत्रविशिष्टस्य करोतेरिति। प्रकृत्याद्युपादानेन व्युत्पत्तिमात्रं क्रियते। तत्त्वतस्तु विशिष्टक्रियावचनः सूत्रयतिः, तस्य व्याकरणं कर्मेति भावः। भिन्नक्रियाविषयमिति। केवल-

मात्वं तु मन्यन्ते] आत्वमपि प्राप्नोति ॥ नैष दोषः ॥ कथम् ? ॥

॥*॥ यस्तु महतः प्रतिपदं समास उक्तस्तदाश्रयं ह्यात्त्वम् ॥
कर्त्तव्यं मन्यन्ते, न लक्षणेन, लक्षणोक्तश्चायम् ॥*॥

एवं तर्हि 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति प्रतिपदं यः समासो विहितस्तस्य ग्रहणं [ कर्त्तव्यं मन्यन्ते, न लक्षणेन । ] लक्षणोक्तश्चायम् ॥ इहापि तर्हि न प्राप्नोति—महान् वाहुरस्य महावाहुरिति ॥*॥ शेषवचनात्तु

प्र.]द्भूतेत्ययन्तु विकृतेरिति दोषाऽभावः।तत्र तु विकृतेः कर्तृत्वे प्रकृतिरानुमानिकी। महती संपन्ना, केति सामर्थ्यादेवाऽमहतीति गम्यते। प्रकृतेस्तु कर्तृत्वे सामर्थ्याद्विकारावस्था प्रतीयते। अमहान्संपन्नः, केन धर्मेणेति महत्त्वेनेति गम्यते। अत्वं त्वं संपद्यते त्वद्भवतीत्यत्र तु वृत्तौ वाक्ये च प्रकृतेरेव कर्तृत्वमिति तदाश्रयः पुरुषो भवति। मध्यमे तु क्रियमाणे युष्मदर्थस्य प्रकृतित्वं प्रतीयेत—त्वमन्यो भवसीति। सर्वत्र चात्र शब्दशक्तिः प्रयोगानुसारिणी प्रमाणम्।एष तु न्यायो महद्भूत इत्यत्र परिहारान्तरसंभवादमहद्भूतेत्यत्र च पुंवद्भाववदात्त्वप्रसङ्गाद्भाष्यकृता नोक्तः। तद्दर्शयति—यस्तु महत इति। सन्महदिति प्रतिपदोक्तसमासस्येह ग्रहणम्। 'महद्भूत' इत्यत्र तु 'कुगतिप्रादय' इति लाक्षणिकः समास इत्यात्त्वाऽभावः। शेषवचनादिति। शेषग्रहणमन्यपदार्थग्रहणं वा कर्त्तव्यम्। अन्यतरेणेष्टस्य लाभात्। उभयोपादानन्तु पुनर्विधानार्थं,पुनर्विधानाच्च प्रतिपदोक्तवद्बहुव्रीहिर्भवती-

उ.]विशिष्टभेदेन भिन्नत्वं क्रिययोरित्यर्थः। नन्वेकस्यैव कर्तृत्वे परस्य क्रियान्वयः कथमत आह—तत्र विकृतेरिति। कर्तृत्वं तु द्वयोरपि। किन्तु कस्य चित्प्राधान्यं, कस्यचिद्गुणत्वमित्येतावानेन विशेषः। 'सव्यापारतरः कश्चित्कचिद्धर्मः प्रतीयते' इत्युक्तेः। उक्तस्य विषयविभागस्य निदानमाह—सर्वत्र चेति। तदनाश्रयणे वीजमाह—एष तु न्याय इति। महद्भूतेत्यत्र चेति। नह्येकस्मिन्प्रयोगे सामानाधिकरण्यं वैयधिकरण्यञ्चाश्रयितुमुचितमिति भावः। तद्दर्शयतीति। परिहारान्तरं दर्शयतीत्यर्थः। शेषग्रहणमिति। ननु शेषग्रहणं प्रथमान्तानां समासलाभार्थं, 'शेषाद्विभाषे'त्यत्र शेषाधिकरस्थादित्यर्थलाभार्थं च। अन्यपदार्थग्रहणञ्च 'नद्यां ग्राहाः सन्ती'त्यत्र 'मा स्नाही'ति वाक्यार्थे माभूदित्यर्थमिति चेन्न। 'पञ्च भुक्तवन्तोऽस्ये'ति वहुव्रीहेरिवानभिधानेनाऽस्यापि वारणसंभवात्। वर्तिपदार्थप्रधानप्रथमान्तानां शेषग्रहणेनैव वारणसंभवाच्च, संवन्धिपर्यन्तं शक्तिरपि लोकत एव सिद्धेति अन्यपदार्थग्रहणं व्यर्थं सत्पुनर्विधानार्थमित्यर्थः। अतएव भाष्ये 'शेषो वहुव्रीहिरिति सिद्धे' इत्युक्तम्। एवञ्चान्यतरेणेति चिन्त्यम्। प्रतिपदोक्तव-

१ इदं क्वचिन्न । २ 'क्वचिन्नास्ति' । ३ 'तस्यापि' । ४ 'मेकार्थीभावोऽपि' 'सिद्ध'।

योऽसौ प्रत्या[1]रम्भात्कृतो बहुव्रीहिः। तस्मात्सिध्यति तस्मिन्—॥*॥ यस्माच्छेषे बहुव्रीहिरिति सिद्धेऽनेकमन्यपदार्थे इत्याह तेन प्रतिप[2]दोक्तं तत्र भवति॥ प्रधानतो वा यतो वृत्तिः ॥*॥ अथ वा ॥*॥ गौणमु[3]ख्ययोर्मुख्ये कार्यसंप्रत्ययः[4]

प्र.]त्यर्थः संपद्यते। प्रधानतो वेति। यस्मात्प्रधानस्य वृत्तिरस्ति तस्माद्गौणस्यात्त्वं न भवतीत्यर्थः। गुणादागतो गौणः। मुखमिव मुख्यः। प्रधानमित्यर्थः। 'शाखादिभ्यो य' इति यप्रत्ययः। लोके हि शब्दे उच्चारिते गौणमुख्यार्थसंभवे मुख्य एवार्थे कार्याणि क्रियन्ते। व्याकरणेऽपि स्वं रूपमित्यत्र रूपग्रहणेन ज्ञापितं 'रूपवदर्थोऽप्यङ्गीक्रियत' इति तत्रापि मुख्यस्यैवार्थस्य कार्येष्वङ्गीकरणम्। कथं पुनरत्र गौणता महदर्थस्य ?। उच्यते। यस्यानुपचरितमहत्त्वं स मुख्योऽर्थः। च्व्यन्तेन तु पूर्वावस्थ उपचरितोत्तरावस्थोऽर्थात्माऽभिधीयत इति महत्त्वममहत्युपचरितमिति गौणार्थाभिधायी महच्छब्दः। यथा गौर्वाहीक इति वाहीके गोशब्दः। पुंवद्भावे तु शब्दविशेषस्यानाश्रयणाद्गौणमुख्यन्यायानवतारान्महद्भूतेति पुंवद्भावः

उ.]दिति। यथा प्रतिपदोक्ते झटिति प्रतिपत्तिः पुनर्विधानेऽपि तद्वदिति बहुव्रीहावप्यात्वसिद्धिरिति भावः। वस्तुतोऽनभिधानमाश्रित्य प्रतिपदोक्तत्वोपपादनं न युक्तं। किञ्चैवमपि महच्छब्दोच्चारणेन विहितत्वरूपं प्रतिपदोक्तत्वं दुर्लभमिति अनित्यत्वादत्र परिभाषाऽप्रवृत्तिरित्येव युक्तम्। इत एवाऽस्वरसादग्रे 'प्रधानतो वा यत' इत्युक्तमिति बोध्यम्। 'प्रधानत' इत्याद्यादित्वात्तसिरित्याह—यस्मात्प्रधानस्येति। यतः प्रधानतो वृत्तिरतस्तस्मिन्नेवात्त्वशास्त्रप्रवृत्तिरिति भाष्याक्षरार्थः। गुणादिति। धर्मत इत्यर्थः। 'शाखादिभ्य इति य'दिति पाठः। 'शाखादिभ्यो य' इति पाठस्तु उगवादिसूत्रस्थभाष्यविरुद्धः। नन्विह शास्त्रे 'स्वं रूप'मिति वचनाच्छब्दस्वरूपस्यैव ग्रहणादर्थो न गृह्यत इति कुतो गौणमुख्यन्यायोऽत आह—व्याकरणेऽपीति। च्व्यन्ते न त्विति। प्रकृतिविकृत्योरभेदविवक्षायां हि च्विः। तत्र महत्त्वाऽमहत्त्वयोर्विरोधात्कस्य चिन्मुख्यत्वमपरस्योपचरितत्वमास्थेयमिति लोकानुभवानुरोधेन वस्तुसत्पूर्वावस्थे वस्तुनि उत्तरावस्थोपचर्यत इति महदर्थस्य गौणतेत्यर्थः।

पूर्वावस्थ इति। विद्यमानपूर्वावस्थ इत्यर्थः। नन्वनया रीत्या पुंवत्त्वमपि न स्यादत आह—पुंवद्भावे त्विति। शब्दविशेषस्य—अर्थोपस्थापकशब्दविशेषस्य। एवञ्च पदान्तरसम्बन्धनिमित्तकोपात्तविशिष्टरूपकार्ये एव गौणमुख्यन्यायो नैवं पुंवद्भाव इति भावः। यत्तु 'स्त्रिया' इत्यर्थोपस्थापकं, स त्वर्थोऽत्रापि मुख्य एवेति तात्पर्यम्। 'अत्वं त्वं संपद्यते त्वद्भवती'त्यादौ युष्मदाद्यादेशार्थं—पदान्तरेति। कथन्तर्हीति। इयं शङ्कोपलक्षणं। पुंवत्त्वेऽपि स्त्रीत्वरूपार्थोपस्थित्या गौणमुख्य-

१श्लोकवार्त्तिकम्। २'प्रतिपदं भवति' [illegible] परिभाषा। ४भाष्यमिदमित्यन्ये।

॥३॥ यथा 'गौरनुबन्ध्योऽजोऽग्नीषोमीय' इति न वाहीकोऽनुबध्यते ॥ कथं तर्हि वाहीके वृद्ध्यात्वे भवतो–गौस्तिष्ठति गामानयेति ? ॥ अर्थाश्रय एतदेवं भवति । यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति । शब्दाश्रये च वृद्ध्यात्वे॥

प्र.]सिद्धः।कथं तर्ह्योदित्यत्र शब्दविशेषानाश्रयेऽपि गोभवदित्यत्र गौणमुख्यन्यायाश्रयेण प्रगृह्यसंज्ञा परिहृता ?। एवं तर्हि महद्भूतेत्यत्र स्त्रीत्वमर्थस्य मुख्यमेव,तदाश्रयश्च पुंवद्भावः। गोमतीभूतेत्यत्र तु प्रकृतेः कर्तृत्वाश्रयणाद्वैयधिकरण्यात् पुंवद्भावाऽभावः । गोभवदित्यत्र लोदन्तस्य निपातस्य गौणार्थत्वात्प्रगृह्यसंज्ञाऽभावः । शब्दाश्रये च वृद्ध्यात्वे इति । प्रातिपदिकस्य सर्वनामस्थाने अम्शसोश्च वृद्ध्यात्वविधानात्प्रातिपदिकस्य चान्वयव्यतिरेकाभ्यां कल्पिताभ्यामर्थवत्ताकल्पनात्तस्यामवस्थायां नास्ति गौणार्थत्वम् । पदान्तरसंबन्धे हि पदस्य गौणार्थत्वाभिव्यक्तिः । अथ वा शब्दो न कदाचित् स्वार्थपरित्यागेनाऽर्थान्तरमभिदधाति,अनित्यत्वप्रसङ्गात्

उ.]न्यायविषयोऽस्तीत्यपि शङ्का बोध्या । तत्रोपलक्षितशङ्कोत्तरमाह–एवन्तर्हीति । स्त्रीत्वमर्थस्य मुख्यमेवेति । तस्यैवार्थस्योपस्थितेरिति भावः । नन्वेवं 'गोमतीभूते'त्यत्रापि पुंवत्त्वं स्यादत आह–गोमतीभूतेत्यत्रेति । वस्तुतो गोमतीभूतेत्यत्र गोमतीनदीभिन्नगोमतीनदीभूतेत्यर्थेनाऽभाषितपुंस्कत्वान्न पुंवत्त्वमिति बोध्यं । 'गोमतीभूतेत्यत्रवि'त्यादिग्रन्थः प्रौढ्योच्यते । सर्वत्र मूर्च्छितावस्थायाः प्रकृतेरेव कर्तृत्वस्योक्तत्वात् । किञ्चैवं महद्भूतेत्यत्रापि पुंवत्त्वानापत्तिः। अथ 'कथन्तर्हीं'त्यादिना कण्ठतः कृतशङ्कोत्तरमाह–निपातस्य गौणार्थत्वादिति । निपातपदेन चादित्वेनैव चादीनामुपस्थितौ ये सार्थकास्तेषां तत्तदर्थविशिष्टानामेवोपस्थितेरिति भावः । ननु 'गोतो णि'दित्यत्रार्थवतो रूपस्य ग्रहणाच्छब्दमात्राश्रयत्वं वृद्धेरसिद्धमत आह—प्रातिपदिकस्येति । तस्यामवस्थायां—प्रातिपदिकमात्रज्ञानावस्थायाम् । एवञ्च तत्संस्कारवेलायां तन्मात्रपर्यालोचनया गौणार्थस्यानुन्मेषान्नास्ति न्यायस्य विषय इत्यर्थः । अर्थप्रकरणशब्दान्तरसंबन्धादिनिरपेक्षस्वरूपमात्रेण यमर्थं शब्दः प्रत्याययति स मुख्यो,यस्तु तदपेक्षः सोऽमुख्य इति व्यवस्थेति भावः। तदाह–पदन्तरेति । अमुं पक्षं दूषयन् गौणत्वं प्रकारान्तरेणाह–अथवेति । पूर्वन्तु मुख्यार्थपरित्यागेनान्यार्थपरिग्रहः शब्दस्योक्तः, इदानीं तु मुख्यार्थस्यैवारोपेणान्यत्र प्रयोग इत्युच्यत इति भावः। अनित्यत्वप्रसङ्गादिति। शब्दार्थसंबन्धस्य नित्यत्वं हि यत्रार्थे यस्य संबन्धग्रहस्तस्य कदाचिदपि तच्छब्दोच्चारणे बोधविषयत्वाऽभावाऽभावात्।तदुक्तं–स्वार्थपरित्यागेनेति । स्वार्थस्य बोधविषयत्वत्यागेनेत्यर्थः। तज्जन्यबोधविषयत्वमेव हि शब्दस्यार्थेन सम्बन्धः । तादात्म्यादिरूपोऽपि बोधविषयतावलकल्प्यस्तदभावे हीयेत । अनेकार्थानान्तु तदन्यतमस्य बोधविषयत्वा-

१ 'गुरनुबन्ध्यो' ।

॥*॥ महदात्त्वे घासकरविशिष्टेषूपसङ्ख्यानं पुंवद्वचनं चासमानाधिकरणार्थम्॥*॥ महदात्त्वे घासकरविशिष्टेषूपसङ्ख्यानं कर्त्तव्यम्। पुंवद्भावश्चाऽसमानाधिकरणार्थो[1] द्रष्टव्यः। महत्या घासो महाघासः। महत्याः करो महाकरः। महत्या विशिष्टो महाविशिष्टः ॥*॥ अष्टनः कपाले हविष्युपसङ्ख्यानम्[2] ॥*॥ अष्टनः कपाले हविष्युपसङ्ख्यानं कर्त्तव्यम्। अष्टाकपालः[4] ॥ हविषीति किमर्थम्? ॥ अष्टकपालं ब्राह्मणस्य ॥*॥ गवि च युक्ते उपसङ्ख्यानम्[3] ॥*॥ गवि च युक्त उपसङ्ख्यानं कर्त्तव्यम्। अष्टागवेन शकटेन ॥ युक्त इति किमर्थम्? ॥ अष्टगवं ब्राह्मणस्य।

प्र.]शब्दार्थसंबन्धस्य।गोत्वं तु क्व चिदारोपितं गोशब्दप्रयोजकं,—गौर्वाहीक इति। क्वचित्तु मुख्यम्। यथा रज्जुं सर्पत्वेनाध्यवसाय सर्पशब्दः प्रयुज्यमानो न स्वार्थं जहाति।अर्थस्तु विपर्यस्तः।तत्र पदस्य पदान्तरसंबन्धेऽर्थविपर्याससंभवात् पदकार्येष्वेव गौणमुख्यन्यायो न प्रातिपदिककार्येष्वित्यविपर्यस्त एव चाऽर्थे वृद्धात्वे अनुभूय गोशब्दो वाहीके समारोपितगोत्वे प्रवर्त्तते। अग्निसोमौ माणवकावित्यत्राग्नेस्तुत्स्तोमसोमा इति षत्वं न भवति,गौणत्वादग्निसोमशब्दार्थयोः,प्रसिद्ध्यप्रसिद्धिकृतत्वान्मुख्यगौणव्यवस्थायाः। महदात्व इति। केचिदन्वाचये 'च'शब्दं मन्यमाना महतो घासो महाघास इत्यत्राप्यात्वं वर्णयन्ति। यथा तु भाष्यं तथा समुच्चये'च'-शब्द इति पुंवद्भावसन्नियोगेनात्वं विधीयमानमन्यत्र न भवतीति लक्ष्यते। अष्टाकपाल इति। अष्टसु कपालेषु संस्कृत इति तद्धितार्थे समासः। 'संस्कृतं भक्षा' इत्यण्। तस्य द्विगोर्लुगिति लुक्। अष्टकपालमिति। समाहारे द्विगुः, 'पात्रादिभ्यः प्रतिषेध' इति स्त्रीत्वाऽभावः। अष्टागवेनेति। अष्टौ गावो युक्ता अस्मिन्निति

उ.]ऽभावाभाव एव तत्संवन्धनित्यत्वमित्याशयः। क्वचित्त्विति।'गां दोग्धी'त्यादौ। अन्यत्राऽन्यशब्दः स्वार्थाऽपरित्यागेन वर्तत इत्यत्र दृष्टान्तमाह—यथा रज्जुमिति। तत्र क्वचिदनाहार्यारोपः, क्वचिदाहार्यारोप इत्यन्यत्। अर्थस्त्विति। विशेष्यभूतोऽर्थस्त्वित्यर्थः। अप्रसिद्धार्थकत्वमपि गौणत्वं दर्शयन्नाह—अग्निसोमाविति। देवताविशेषवाचिनोर्यदा यदृच्छयाऽन्यत्र सङ्केतस्तदेदमुदाहरणं। यदा त्वयं माणवकोऽग्निरयं सोम इति केन चित्प्रयुक्ते परोऽग्निसोमौ भोजये'ति द्वन्द्वं प्रयुङ्क्ते तदा गौणलाक्षणिकत्वमपि गौणत्वमत्रेति बोध्यम्। प्रसिद्धदेवताद्वन्द्ववाच्यग्निषोमशब्दस्य तत्सदृशपरत्वे 'अग्नीषोमौ माणवका'वित्यत्र ईत्वषत्वे भवत एव। तत्प्रवृत्तिवेलायां गौणार्थोपस्थापकत्वाऽभावात्। यथा तु भाष्यमिति। उपात्तशब्दोदाहरणं विहाय लिङ्गविशिष्टपरिभाषागम्योदाहरणदानादिति भावः। कथं-

१ 'नानाधिकरणा'। २ इदं क्वचित्। ३ इदं [illegible]स्तम्। ४ 'अष्टाकपालं चरुं निर्वपेत्'।

॥*॥ [अन्यप्रकृतिरमहान् भूतप्रकृतौ महान्महत्येव ॥
तस्मादात्वं न स्यात्पुंवत्तु कथं भवेत्तत्र ॥ १ ॥
अमहति महान् हि वृत्तस्तद्वाची चात्र भूतशब्दोऽयम् ॥
तस्मात्सिद्ध्यति पुंवन्निवर्त्यमात्त्वं तु मन्यते ॥ २ ॥
यस्तु महतः प्रतिपदं समास उक्तस्तदाश्रयं ह्यात्वम् ॥
कर्त्तव्यं मन्यन्ते, न लक्षणेन, लक्षणोक्तश्चायम् ॥ ३ ॥
शेषवचनात्तु योऽसौ प्रत्यारम्भात्कृतो बहुव्रीहिः ॥
तस्मात्सिद्ध्यति तस्मिन्प्रधानतो यतो वृत्तिः ॥ ४ ॥*]॥

**द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः ॥ ६।३।४७॥**

॥*॥ प्राक्शतात् ॥*॥ प्राक्शतादिति वक्तव्यम् । इह मा भूत् द्विशतम् । अष्टशतम् । द्विसहस्रम् । अष्टसहस्रम् ॥ [द्व्यष्टनः] ॥

**विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥ ६।३।४९ ॥**

सर्वेषाङ्ग्रहणं किमर्थम् ? ॥ चत्वारिंशत्प्रभृतौ सर्वेषां [ ग्रहणं सर्वेषां ] विभाषा यथा स्यात् द्व्यष्टनोश्च त्रेश्च॥नैतदस्ति प्रयोजनम्। प्रकृतं द्व्यष्टनोर्ग्रहणमनुवर्तिष्यते ॥ यदि तदनुवर्तते त्रेस्त्रयो द्व्यष्टनोश्चेति द्व्यष्टनोरपि त्रय आदेशः प्राप्नोति॥नैष दोषः॥*॥मण्डूकगतयोऽधिकाराः॥*॥यथा—मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ॥[*॥एकयोगो वा॥*]॥ अथ वैकयोगः करिष्यते । 'द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योस्त्रेस्त्रयः' । ततो 'विभाषा चत्वारिंश-

प्र.]त्रिपदे बहुव्रीहौ द्वयोर्द्विगुः । गोरतद्धितलुकीति टच् समासान्तः। तत्र दीर्घत्वेन गुणार्थसंप्रत्ययाद्गतार्थत्वाद्युक्तशब्दस्य निवृत्तिः । अथ वा समाहारे द्विगुस्तत्र साहचर्यादभेदोपचारादष्टगवेन युक्तं शकटमष्टागवमुच्यते । [आन्महतः] ॥

विभाषा । मण्डूकगतय इति । द्व्यष्टन्शब्दार्थं त्रय आदेशो न शक्नोति वक्तुमिति त्रयआदेशेन संबन्धाऽभावादिहैव द्व्यष्टनोरभिसंबन्धः । अथ वेति । एका-

उ.]न्तर्हि युक्तशब्दाऽभावे तदर्थप्रतीतिरत आह—अष्टौ गाव इति।ननु त्रिपदे बहुव्रीहौ दीर्घे सत्यपि युक्तशब्दनिवृत्तिर्दुर्लभा, उपायाऽभावादित्यत आह—अथवेति । अभेदोपचाराऽभावे तु प्रत्युदाहरणं बोध्यम् । [आन्महतः समाना] ॥

विभाषा च । नन्वधिकारेषु नदीप्रवाहन्यायस्य युक्तत्वात्कथं मण्डूकगतिरित्याशङ्क्याऽयोग्यत्वादत्राऽसम्बन्ध इत्याह—द्व्यष्टशब्दार्थमिति । ननु विधेयभेदेन वाक्यभेदस्य युक्तत्वात्कथमेकयोगत्वमत आह—एका भवतिक्रियेति । प्रतिपत्ति-

१ इमे श्लोका इह क्वचिन्न । २ इदं लुप्तम् । ३ 'द्व्यष्टनः'। ४ इदं वार्त्तिकमित्यन्ये । पाठोऽयमस्वरः । ५ तथा' । ६ इदं लुप्तं स्यादिति गौडाः' ।

त्प्रभृतौ सर्वेषा'मिति। नैकयोगेऽनुवृत्तिर्भवति ॥ अथ वोभयं निवृत्तं तदपेक्षिष्यामहे ॥ [ विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ] ॥

हृदयस्य हृल्लेखयदण्लासेषु ॥ ६।३।५० ॥

यदण्ग्रहणमिदं प्रत्ययग्रहणम् । तत्र 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवती'ति यदणन्ते प्राप्नोति ॥*॥ यदण्ग्रहणे रूपग्रहणं लेखग्रहणात् ॥*॥ यदण्ग्रहणे रूपग्रहणं द्रष्टव्यम् ॥ कुतः ? ॥ 'लेखग्रहणात्'। यदयं लेखग्रहणं करोति तज्ज्ञापयत्याचार्यो 'न यदणन्ते भवती'ति ॥ अत आह 'अत्यल्पमिदमुच्यते। सर्वत्रैवोत्तरपदाधिकारे प्रत्ययग्रहणे रूपग्रहणं द्रष्टव्यम् ॥ कुतः ?॥ लेखग्रहणादेव॥ किं प्रयोजनम् ?॥ कुमारी गौरितरा।

प्र.]भवतिक्रिया आत्वत्रयआदेशकर्तृकोपादीयते । ततो यस्मिन् काले ह्यष्टनोरात्वं तस्मिन्नेव त्रिशब्दस्य त्रयआदेश इत्यर्थः । अथ वोभयमिति । समुदायोऽपेक्ष्यः स तु एक एवेत्यनन्तरस्य विधिर्वा भवति प्रतिषेधो वेत्यपि नास्ति ॥

हृदय । रूपग्रहणमिति । स्वरूपस्य ग्रहणं न तु तदन्तस्येत्यर्थः । लेखग्रहणादिति । एतद्वचनान्यथानुपपत्त्या च लेखशब्दोऽणन्तो गृह्यते न तु घञन्त इति घञि 'हृदयलेख' इत्येव भवति । सर्वत्रैवेति । प्रकरणापेक्षं ज्ञापकमाश्रीयते न त्वेतद्योगापेक्षमेवेत्यर्थः । कुमारी गौरितरेति । उदाहरणदिगियं, समासस्तूदाहार्यः-'कुमारगौरितरे'ति । अत्र हि घान्त उत्तरपदे पुंवद्भावं बाधित्वा ह्रस्वः

उ.]वाक्यमेकं, प्रक्रियावाक्यन्तु भिद्यत इति भावः । ननु लौकिकेऽपेक्षालक्षणेऽधिकारेऽपि अनन्तरस्यैवापेक्षा स्यान्न तु व्यवहितस्येत्यत आह-समुदाय इति ॥

हृदयस्य हृल्लेख । भाष्ये-यदणन्ते प्राप्नोतीति । ननु 'प्रत्ययग्रहणे चापञ्चम्या' इति निषेधात्कथमत्र तदन्तविधिः,यदणोः परत इत्युक्ते कस्मादिति आकाङ्क्षासत्त्वेन हृदयाद्यदणोः परतस्तस्यादेश इत्यवगमात् । अतएव सुपि चेत्यादौ न तदन्तविधिरिति चेन्न । 'उत्तरपदे' इत्यनेनाऽन्वयाय तमेव विशेष्यमाश्रित्य सामर्थ्येन तदन्तविधिरित्यदोषात् । सिद्धान्ते त्वेतद्विषये उत्तरपदे इत्यसंबन्धो ज्ञापकादेवेति बोध्यम् । 'रूपग्रहण'मित्यस्य रूपस्य ग्रहणं नार्थस्येति नार्थ इत्याह स्वरूपस्येति । ननु घञन्ते लेखग्रहणस्य चारितार्थ्यात्कथं ज्ञापकत्वमत आह एतद्वचनेति । एतज्ज्ञापकत्ववचनेत्यर्थः । उदाहरणदिगिति । भाष्ये-कुमारी गौरितरेति स्थिते इत्यर्थ इत्यन्ये । वस्तुतो वयोवाचकानां 'जातेरस्त्रीविषये'ति सूत्रे जातिलक्षणद्वयप्रणयनेन वैकल्पिकजातिकार्यबोधनाज्जातेश्चेति निषेधपक्षे भाष्ये प्रयोगः

१अत्रत्यं वार्तिकं लुप्तं सुधीभिरूह्यम्। २ 'मिदं ज्ञाप्यते' । ३ बहुव्रीहिसमासाऽप्रिप्रायेणेदम्, अन्यथा ... सूत्रस्य प्रतिप्रसवरूपत्वेन कर्मधारयपरत्वेऽसाङ्गत्यापत्तेः।

'घादिषु नद्या ह्रस्वो भवती'ति ह्रस्वत्वं प्रसज्येत ॥ यद्येतज्ज्ञाप्यते खित्यनव्ययस्येति खित्येवानन्तरस्यानव्ययस्य ह्रस्वत्वं प्राप्नोति॥ 'खित्यनन्तरो ह्रस्वभावी नास्ती'ति कृत्वा खिदन्ते उत्तरपदे भविष्यति॥ ननु चायमस्ति स्तनन्धय इति ॥ अत्रापि शपा व्यवधानम्॥ एकादेशे कृते नास्ति व्यवधानम् ॥ एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव । अथ वैतज्ज्ञापयत्याचार्यः 'खित्यनन्तरस्य न भवती'ति यदयमनव्ययस्येति प्रतिषेधं शास्ति । नहि खित्यनन्तरमव्ययमस्ति ॥ [ हृदयस्य हृल्लेखयदण् ] ॥

## पादस्य पदाज्यातिगोपहतेषु ॥ ६।३।५२ ॥

॥*॥ पदादेशोऽन्तोदात्तनिपातनम् [ पदोपहतार्थम् ] ॥*॥ पदादेशोऽ-

---

प्र.]स्यात्। संज्ञाविधौ च प्रत्ययग्रहणे तदन्तविधेः प्रतिषेध, उत्तरपदाधिकारे तूत्तरपदस्य येन विशेषणात्स्यादेव तदन्तविधिः। संज्ञाविधौ तदन्तविधिनिषेधस्य तु फलं 'स्वतीर्ण'इत्यत्र धातुतकारस्य नत्वनिवारणम् । विशेष्याऽनिर्देशान्नत्वे निष्ठया तदन्तविध्यभावात् क्तक्तवतुतकारस्यैव नत्वं प्रवर्त्तते। ननु चायमिति । खशैव कर्त्तुरभिधानाच्छपोऽप्रवृत्तिं मन्यते । अत्रापीति । यथा पचतीत्यत्र लेनाभिहिते कर्तरि शब्भवति एवमत्रापीति भावः । एकादेशे कृत इति । अयादेशात्परत्वादेकादेश इति भावः । स्थानिवद्भावादिति । श्रुतेर्लिङ्गं दुर्बलमिति स्थानिवद्भावो न बाध्यते । अथ वेति । न ह्यव्ययात्परः खित्प्रत्ययः संभवति ।

पादस्य । पादशब्दो वृषादित्वात्, 'स्वाङ्गशिटामदन्ताना'मिति वाद्युदात्तः, तदादेश आन्तर्यादाद्युदात्त एव प्राप्नोतीत्याह—पदादेश इति।पदोपहतमिति। अत्र

---

उ.] समास एवेति न दोषः । बाधित्वेति । परत्वादिति भावः । ननु संज्ञाश्रये विधौ तदन्तग्रहणाऽभावस्य 'सुप्तिङन्त'मित्यन्तग्रहणेन ज्ञापितत्वात्कथमत्र तत्प्रसङ्गोऽत आह—संज्ञाविधाविति । संज्ञाया विधेयत्वे सति निषेधो ननु तदाश्रयेऽन्यत्रेत्यर्थः । नन्वेवं संज्ञाविधौ तदन्तविधिप्रतिषेधस्य किं फलमत आह—संज्ञेति । अन्यथा 'क्तक्तवतू' इत्यनेन तदन्तस्यैव संज्ञायामत्र दोषः । दात्परत्वसंपत्तये—द्दषदिति । ननु नत्वविधायके निष्ठान्तस्येत्यर्थात्स्यादेव दोषोऽत आह—विशेष्येति । खशैवेति । कर्तरीति विकरणस्यैवार्थनिर्देश इति तदभिमानः । यथेति । सार्वधातुकविशेषणं कर्तृग्रहणमिति भावः । नन्वयादेशोत्तरमेकादेशे ह्रस्वभाविनोऽभावान्न दोषोऽत आह—परत्वादिति । ननु ज्ञापिततदन्तविध्यभावसामर्थ्यात्स्थानिवत्त्वं बाध्यतामत आह—श्रुतेर्लिङ्गमिति । स्थानिवत्त्वं श्रौतं, तदन्तविध्यभावस्तु लैङ्ग इति भावः ।

---

१ एतदन्तोऽधिकरस्य ग्रन्थः ... मावदित्यन्ये । २ इदं क्वचिदपि नास्ति ।

न्तोदात्तनिपातनं कर्तव्यम्॥ किं प्रयोजनम्?॥॥*॥ 'पदोपहतार्थम्'॥*॥ पादेनो-पहतं पदोपहतम्। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वे पूर्वपदान्तोदात्तत्वं यथा स्यात् ॥*॥ उपदेशिवद्वचनं च स्वरसिद्ध्यर्थम् ॥*॥ उपदेशिवद्भावश्च वक्तव्यः॥ किं प्रयोजनम् ? ॥ 'स्वरसिद्ध्यर्थम्'। उपदेशावस्थायामन्तोदात्त-निपातने कृते समासस्वरेण बाधनं यथा स्यात्। पदाजिः। पदातिः॥

पद्यत्यतदर्थे ॥ ६।३।५३ ॥

॥*॥ पद्भावे इके चरतावुपसङ्ख्यानम् ॥*॥ पद्भावे इके चरतावुपस-ङ्ख्यानं कर्तव्यम्। पादेन चरति पदिकः ॥ [ पद्यत्यतदर्थे ] ॥

वा घोषमिश्रशब्देषु ॥ ६।३।५६ ॥

॥*॥ निष्के चोपसङ्ख्यानम् ॥*॥ निष्के चोपसङ्ख्यानं कर्तव्यम्। पन्निष्केण। पदनिष्केण ॥ [ वा घोषमिश्रशब्देषु ] ॥

उदकस्योदः संज्ञायाम् ॥ ६।३।५७ ॥

॥*॥ संज्ञायामुत्तरपदस्य च ॥*॥ सञ्ज्ञायामुत्तरपदस्य चेति वक्तव्यम्। इहापि यथा स्यात्। लोहितोदः क्षीरोद इति ॥ [ उदकस्योदः संज्ञायाम् ]॥

एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥ ६।३।५९ ॥

एकहलादाविति किमर्थम् ? ॥ उदकस्थानम्। उच्यमानेऽप्येतस्मिन्नर्थे

---

प्र.]तृतीया कर्मणीत्यनेन पूर्वपदप्रकृतिस्वरेऽन्तोदात्तत्वं भवति। तत एकादेशः स्वरितो वानुदात्ते पदादाविति पक्षे स्वरितः,पक्षे तूदात्तः। उपदेशिवद्वचनमिति। यथोपदेशिनः सतिशिष्टेन स्वरेण बाध्यते तथाऽस्यापीत्यर्थः। समासस्वरेणेति। समासाश्रयेण कृत्स्वरेणेत्यर्थः। [ पादस्य पदाज्याति ]।

पद्य। पदिक इति। 'पर्पादिभ्यः ष्ठ'न्निति ष्ठन्प्रत्ययः॥ [ पद्यत्यतदर्थे ]॥

उदक। उदकशब्दसमानार्थ उदशब्दो विद्यते तथा चा'ऽप्रसन्नः प्रसन्नोद'-मित्यसंज्ञायामप्युदशब्दः प्रयुज्यते। संज्ञायां तूदकशब्दप्रयोगनिवृत्त्यर्थमुदादेशविधा-नमित्याहुः।एतदन्ये न मृष्यन्ति।एवमभ्युपगमे वक्ष्यमाणो विकल्पोऽनर्थकः स्यात्।

---

उ.] पादस्य पदा। पदादेशोऽत्राऽदन्तः। अदन्तानामिति। अवन्तानामिति पाठेऽपि स एवार्थः। भाष्ये—पूर्वपदप्रकृतिस्वरत्वे इति। परत्वादेकादेशात्पूर्वं स्वर इत्यर्थः। कृत्स्वरेणेति। समासान्तोदात्तत्वाऽपवादत्वात्कृदुत्तरपदप्रकृतिस्वरस्येत्यर्थः।

उदकस्योदः। एतदन्ये इति। एवञ्च प्रसन्नोदमिति प्रयोगोऽसाधुरिति सूत्र-बलादवसीयत इति भावः। व्यवस्थार्थं स इत्यपरे। [उदकस्योदः] ॥

एकहलादौ। किमर्थमिति। किंशब्दः क्षेप इत्याह—अतिप्रसङ्गेति। भाष्योक्त-

---

१ पूर्वप्रतीकधारणमेतदित्यन्ये। वार्तिकमित्यपरे।२ इदं क्वचिन्न।
३ 'कर्त्तव्यः'। ४ 'पदाजः'। ५ 'स्यात्'। ६ 'व्यचनिऽत्रापि'।

किमिदं यलोपे वर्णग्रहणमाहोस्वित्सङ्घातग्रहणम् । कश्चात्र विशेषः ? ॥
॥*॥ यलोपे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधः ॥*॥ यलोपे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधो वक्तव्यः । शुच्यिता शुच्यितुम्[1] ॥ अस्तु तर्हि सङ्घातग्रहणम् ॥ यदि सङ्घातग्रहणमन्त्यस्य लोपः प्राप्नोति ॥ सिद्धोऽन्त्यस्य पूर्वेणैव तत्राऽऽरम्भसामर्थ्यात्सर्वस्य भविष्यति ॥ एवमपि तेनातिप्रसक्तमिति कृत्वा नियमो विज्ञायेत[2] 'यस्य हल एव नान्यतः' ॥ क्व मा भूत्—लोलूयिता पोपूयिता ॥ कैमर्थक्यान्नियमो भवति ? ॥ विधेयं नास्तीति कृत्वा । इह चास्ति विधेयम् ॥ किम् ? ॥ अन्त्यस्य लोपः प्राप्तः स सर्वस्य विधेयः । तत्राऽपूर्वो विधिरस्तु नियमो वेत्यपूर्व[3] एव विधिर्भविष्यति न नियमः ॥ एवमप्यन्त्यस्य प्राप्नोति ॥ किं कारणम् ? ॥ न हि लोपः सर्वापहारी ॥ ननु च सङ्घातग्रहणसामर्थ्यात्सर्वस्य भविष्यति ॥*॥ सङ्घातग्रहणं चेत्क्यस्य विभाषायां दोषः ॥*॥ सङ्घातग्रहणं चेत्क्यस्य विभाषायां दोषो भवति । समि-

प्र.] यस्य । किमिदमिति। यद्यागन्तुनाऽकारेण निर्देशस्ततो वर्णमात्रग्रहणमन्यथा तु सङ्घातग्रहणमिति पक्षद्वयसंभवः । अन्त्यस्येति । अलोऽन्त्यस्येति वचनात् । कैमर्थक्यादिति । कोऽर्थो यस्य तत्किमर्थकं, तस्य भावः कैमर्थक्यम् । प्रश्नविषययोः संबन्धोऽत्र भावप्रत्ययवाच्यः। अपूर्व एव विधिरिति । नियमे हि श्रुतार्थत्यागेनाऽश्रुताया अन्यनिवृत्तेः सामर्थ्यात्परिकल्पनम्, उक्तानुवाददोषश्च प्राप्नोति । एवमप्यन्त्यस्येति । अलोन्त्यपरिभाषोपस्थानात्।अपूर्वस्य विधेरसंभवाद्विधिनियमसंभवे च विधिरेव ज्यायानित्यस्य न्यायस्याऽयमविषय इत्यर्थः । संघातग्रहणसामर्थ्यादिति । किं 'यस्य हल' इत्यस्य विधिरूपत्वं बाध्यतामुतालोऽन्त्यस्येति परिभाषेति पारार्थ्यादप्रधानस्य परिभाषायास्त्यागो युक्तो नतु प्रधानस्य विधिरूप-

उ.] यस्य हलः । अलोऽन्त्यस्येति । हलन्ताङ्गस्य निमित्तं यो यशब्दस्तस्य लोप इत्यर्थ इति भावः । नन्वारम्भसामर्थ्यादित्ययुक्तम् । आरम्भस्य नियमार्थत्वेन चारितार्थ्यादित्याशङ्कते—भाष्ये—एवमपीति । सम्बन्धोऽत्रेति । 'किमर्थक'शब्देन जिज्ञासाविषयप्रयोजनकमुच्यते । तदुत्तरभावप्रत्ययेन जिज्ञासाप्रयोजनयोः संबन्धो विषयविषयिभावरूप उच्यते । प्रयोजनज्ञाने हि न तज्जिज्ञासा । तदज्ञानं च तदभावात्, सत्त्वे हि तज्ज्ञायेतैवेति स निष्प्रयोजनत्वरूपतया फलति । नियमाद्विधेर्बलवत्त्वे युक्तिमाह—नियमे हीति।'सामर्थ्यात्परिकल्पन'मित्यनेन तस्या अशाब्दत्वं सूचयति । अलोऽन्त्यपरिभाषेति । एवं च परिभाषाबाधस्य विधिवादिनोऽप्यावश्यकत्वेनास्य विधेर्न नियमाल्लघुत्वमिति भावः । विधिरूपत्वस्येति । 'विधिरूप-

१ 'शुच्यिता' । २ 'विज्ञायते' । ३ 'नियमो वेत्यपूर्व' । ४ 'योजनकत्व' ।

धिता समिध्यिता। यदा लोपस्तदा सर्वस्य लोपः। यदाऽलोपस्तदा सर्वस्याऽलोपः प्राप्नोति ॥*॥ आदेः परवचनात्सिद्धम् ॥*॥ [ आदेः परवचनात्सिद्धम् ]। हल इति पञ्चमी। तस्मादित्युत्तरस्याऽऽदेः परस्येति यकारस्यैव भविष्यति ॥ अथवा पुनरस्तु वर्णग्रहणम् ॥ ननु चोक्तं 'यलोपे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेध' इति ॥ नैष दोषः। अङ्गादिति हि वर्तते ॥ न वा अङ्गादिति पञ्चम्यस्ति ॥ एवं तर्ह्यङ्गस्येति संबन्धषष्ठी विज्ञास्यते। अङ्गस्य

प्र.]त्वस्य[3] बाधनम्। समिधितेति। समिधमिच्छति आत्मन इति क्यच्।ततस्तृच-इट्।इह वर्णग्रहणे'क्यस्य विभाषे'त्यत्र क्येन यकारो विशेष्यते,—क्यस्य यो यकारो-हलः परस्तस्य विभाषा लोपो भवत्यकारस्य त्वतो लोप इति नित्यो लोप इति यथेष्टं रूपद्वयं सिध्यति। संघातग्रहणे तु 'यस्य हल' इत्यनेन येन नाप्राप्तिन्यायेनाऽतो लोपो बाध्यः। यलोपोऽपि क्यस्य विभाषेति विकल्पेन बाध्यस्ततश्च पक्षे संघातस्यैव श्रवणं प्राप्नोति। नित्ययलोपवदल्लोपस्यापि विकल्पेन बाधनात्। एतच्च न धातुलोप इत्यस्य प्रत्याख्यानाय यस्येति योगविभागो व्याख्यातस्तमनाश्रित्योक्तम्। तदाश्रयेऽल्लोपस्य सिद्धत्वात्। क्यस्येति कण्ड्वादियकोऽपि ग्रहणं केचिदिच्छन्ति, कितो यशब्दस्य ग्रहणे तात्पर्यात्, ककारस्यानुबन्धस्याऽऽदित्वमविवक्षितमिति वदन्तः। एतदपरे नेच्छन्ति। आदिभूतककारानुबन्धनिर्देशे सत्यादित्वाऽविवक्षायां प्रमाणाऽभावात्। लक्ष्यस्य च तथा शिष्टैरप्रदर्शनात्। आदेरिति। ततश्च 'क्यस्य विभाषे'ति यकारस्यैव लोपो विकल्पेन,अकारस्य तु नित्यमिति सिद्धमिष्टम्। अङ्गादिति वर्तत इति। अङ्गस्येति निमित्तनिमित्तिभावसंबन्धाश्रयणे पञ्चम्यर्थलाभात् फलाऽभेदात्पञ्चमीनिर्देशः कृतः। इतरो यथोक्तमभिप्रायमप्रतिपद्याऽऽह—न वै अङ्गा-

उ.]बाधन'मिति पाठे विधेयेद्रूपं विधित्वं तस्य बाधनमित्यर्थः।इदमुपलक्षणम्।नियमवादिना प्रधानस्याऽतो लोप इत्यस्य हलोऽनन्तरयविषये बाधः कल्प्य इत्यपि बोध्यम्। अकारस्य त्विति। अत्र पक्षे विषयभेदादल्लोपयलोपयोर्बाध्यबाधकत्वाऽभाव इति भावः। अतो लोपो बाध्य इति। एकविषयत्वादिति भावः। अल्लोपस्यापि विकल्पेनेति। एवं च तदभावेऽप्यल्लोपाऽभाव इति भावः। इदं च द्वितीयतृतीयचतुर्थेत्यादिसूत्रस्थभाष्यविरोधाच्चिन्त्यम्। तत्र हि वैकल्पिकाऽपवादाऽभावे उत्सर्गस्य प्रवृत्तिरङ्गीकृता। भाष्यकृता तु वास्तवपरिहारान्तरसद्भावादिदं नोक्तमिति तत्त्वम्। तदाश्रये इति। विशेषविहितयलोपेनाल्लोपस्य बाधा मा भूदित्यर्थत्वाद्योगविभागस्येति भावः। हल इति पञ्चमीति भाष्ये। अङ्गनिमित्तस्य हल उत्तरस्य यस्य लोप इत्यर्थ इत्यल्लोपापवादत्वमेव नास्येति भावः। नन्वङ्गादित्यस्याऽभावेना-

१ इदं व्याख्यानं [illegible] स्यात्। २ 'त्वबाधनम्'। 'त्वबाधनं'।

यो यकारः ॥ किंचाङ्गस्य यकारः ? ॥ निमित्तम् । यस्मिन्नङ्गमित्येतद्भवति ॥ कस्मिंश्चैतद्भवति ?॥ प्रत्यये । [ यस्य हलः ] ॥

णेरनिटि ॥ ६।४।५१ ॥

अथा[1]ऽनिटीति किमर्थम् ? ॥ कारयिता कारयितुम् ॥*॥ अनिटीति शक्य[2]मवक्तुम् ॥*॥ कस्मान्न भवति कारयिता कारयितुम् ? ॥ निष्ठायां सेटीत्येत[3]न्नियमार्थं भविष्यति–'निष्ठायामेव सेटि णेर्लोपो भवति नान्यत्र' ॥ क्व मा भूत् ?॥ कारयिता कारयितुम्॥ अथवोपरिष्टाद्योगविभागः करिष्यते । इदमस्ति 'निष्ठायां सेटि' 'जनिता मन्त्रे' 'शमिता यज्ञे' । ततः–'अय्' । अयादेशो भवति णेः सेटि । तत 'आमन्ताल्वाय्येत्न्विष्णुपु'। अव्भवतीत्येव॥

निष्ठायां सेटि ॥ ६।४।५२ ॥

अथ सेड्ग्रहणं किमर्थम् ? ॥*॥ निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थम्॥*॥ नि[4]ष्ठायां सेड्ग्रहणं क्रियतेऽनिटि प्रतिषेधो यथा स्यादिति । संज्ञपि[5]तः पशुरिति ॥*॥ निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेत्तत्सिद्धमनिडभावा[6]त् ॥*॥

---

प्र.]दिति। संबन्धषष्ठीति। अनेकसंन्धसंभवेऽप्यन्तरङ्गत्वान्निमित्तनिमित्तिभावलक्षण एव संवन्धः परिगृह्यते । प्रत्यय इति । प्रत्ययहेतुकत्वादङ्गव्यपदेशस्य । ननु च समुदायः प्रत्ययोऽङ्गस्य निमित्तं नतु यकारमात्रम् । अकारे लुप्ते यकारमात्रस्य प्रत्ययत्वाददोषः । [ यस्य हलः ] ॥

णेरनि । निष्ठायामेव सेटीति । सेट्येव निष्ठायामिति नियमो न भवति, अनिटो निष्ठाया अभावात् । अयादेशो भवतीति । लोपापवाद इत्यर्थः ॥

निष्ठायाम् । संज्ञपित इति । 'सनीवन्तर्द्धे'ति सनि विकल्पविधानाद्यस्य

---

उ.]ङ्गादिति वर्त्तत इत्यनुपपन्नमत आह–अङ्गस्येतीति।अनेकसम्बन्धेति।अवयवावयविभावादिरूपेत्यर्थः । अन्तरङ्गत्वादिति । अङ्गसंज्ञासूत्रे प्रतीतत्वेन शास्त्रीयत्वेन प्रथमप्रतीतत्वादित्यर्थः । ननु प्रत्ययोऽङ्गं नोत्पादयतीति कथं तस्य हेतुत्वमत आह–प्रत्ययहेतुकत्वादिति । प्रत्ययत्वाददोष इति । यद्यपि परत्वाद्यलोपेऽकारलोप इति कथं तस्य प्रत्ययत्वं, तथाऽपि यदि पूर्वमलोपः स्यात्तस्यापि प्रत्ययत्वं स्यादिति तार्किकप्रत्ययत्वाददोष इत्यर्थः । [ यस्य हलः ] ॥

णेरनिटि । अनिटो निष्ठाया अभावादिति । 'ण्यन्तात्पराया' इति शेषः । एतच्चोत्तरसूत्रे स्फुटीभविष्यति । [ णेरनिटि ] ॥

निष्ठायां सेटि । संज्ञपिते 'मारणतोषणनिशामनेषु ज्ञा' इति मरणार्थे मित्त्वा-

---

१ अथेति क्वचिन्न । २ भाष्यमिदमित्यन्ये । ३ 'इति तन्नियमा' । ४ निष्ठायां सेड्ग्रहणं' । ५ 'संकुचितः' । ६ क्वचिन्न ।

निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेदन्तरेणापि सेड्ग्रहणं तत्सिद्धम् ॥ कथम् ? ॥ 'अनिडभावात्' ॥ ननु च 'यस्य विभाषे'ति ज्ञपेरिड्प्रतिषेधः?[1] ॥*॥ एकाचो हि प्रतिषेधः ॥*॥ एकाचो हि स[2] प्रतिषेधो, ज्ञपिश्चानेकाच् ॥ ॥*॥ इड्भावार्थं तु तन्निमित्तत्वाल्लोपस्य ॥*॥ इड्भावार्थं तर्हि सेड्ग्रहणं क्रियते ॥ कथं पुनः सेटीत्यनेनेट् शक्यो भावयितुम् ? ॥ 'तन्निमित्तत्वाल्लोपस्य' । नात्राऽकृत इटि णिलोपेन भवितव्यम् ॥ किं कारणम् ? ॥ सेटीत्युच्यते । ॥*॥ अवचने हि णिलोप इड्प्रतिषेधप्रसङ्गः ॥*॥ अक्रियमाणे हि सेड्ग्रहणे णिलोपे कृत एकाच इतीड्प्रतिषेधः प्रसज्येत । कारितम् हारितम् ।

---

प्र.]विभाषेतीड्प्रतिषेधः। सेड्ग्रहणसामर्थ्याच्च पूर्वेणापि न भवति। वा दान्तशान्तेत्यत्र ज्ञपेर्निपातनमाश्रीयते–ज्ञप्तो ज्ञपित[3] इति । एकाचो हीति । 'यस्य विभाषे'त्यत्रैकाच इत्यधिकारात् । इड्भावार्थं त्विति । इटि कृते णिलोपो यथा स्यादकृते मा भूदिति कालवधारणार्थं सेड्ग्रहणमित्यर्थः । अक्रियमाणे हि सेड्ग्रहणे कारि–त इति स्थिते णिलोपश्च प्राप्नोति इड्च । नित्यत्वाण्णिलोपः प्राप्नोति । तत्र कृते 'एकाच' इतीड्प्रतिषेधः प्राप्नोति, एकदेशविकृतस्याऽनन्यत्वात्स एव करोतिर्भवतीति । 'यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्य'मित्येतच्च कार्यगतभावाभावापेक्षायां तु नाऽऽश्रीयत इत्यनित्य एवेडागमः। इटि तु णिलोपे क्रियमाणे न प्रवर्तते इड्प्रति-

---

उ.]ण्णिचि पुकि मितो ह्रस्वत्वम् । अत्रार्थे संपूर्वकस्यैव प्रयोग इति पुरुषकारे उक्तम् । नन्वनेन णिलोपाभावेऽपि पूर्वेण स्यादत आह–सेड्ग्रहणेति । नन्वेवं वा दान्तशान्तेतीड्प्रतिषेधप्रकरणे ज्ञप्त इति निपातनं किमर्थमत आह–वा दान्तेति । ज्ञपेरिति । मित्संनिधौ पाठे कर्तव्येऽग्रे पाठेन तत्राऽमित एव ग्रहणम् । छन्न इत्यपि निपातनममित एव।ज्ञापने मित्त्वाभावेन तत्रेड्प्रतिषेधणिलुकोर्विकल्पेन निपातनाज्ज्ञप्तो ज्ञापित इति रूपद्वयसिद्धिः । अत एव 'तज्ज्ञापयत्याचार्य' इत्यादि संगच्छत इति नारायणः । अन्ये तु वा दान्तेति सूत्रे तु 'ज्ञप मिच्चे'त्यस्य निपातनं, प्रतिपदोक्तत्वात् । अत एव कैयटे 'ज्ञपेर्निपातनमाश्रीयते ज्ञप्तो ज्ञपित' इति क्वचित्पाठो दृश्यत इत्याहुस्तच्चिन्त्यम् । तेनैव सिद्धावत्रत्योदाहरणपरभाष्यविरोधापत्तेः । नन्वनेन णिलोपो विधीयत इति कथमिटो भावः स्यादत आह–इटि कृत इति । ननु परत्वादेवेटि कृते णिलोपः सिद्ध इति किं सेड्ग्रहणेनेत्यत आह–अक्रियमाणे हीति । ननु य एकाच्धातुः 'कृ'–इति सोऽयं न भवतीति कथमिड्प्रतिषेधोऽत आह–एकदेशेति । कार्यगतेति । कृताऽकृतप्रसङ्गमात्रेण नित्यत्वम् । तद्वैपरीत्येनैवानित्यत्वं चाऽऽश्रीयत इति भावः। अत्रापि सेड्ग्रहणमेव मानम् । ननु पूर्वमित्यपि

---

१ 'विप्रतिषेधः' । २ 'स वितिप्रतिषे' । ३ 'ज्ञपे' । ४ 'ज्ञपित' । ५ 'कृत इति' ।

एवं तर्हि नार्थः सेङ्ग्रहणेन, नापि सूत्रेण ॥ कथम् ? ॥ सप्तमे योगविभागः करिष्यते । इदमस्ति—निष्ठायां नेड्भवति। ततो 'णेः'। ण्यन्तस्य निष्ठायां नेड्भवति । कारितम् हारितम् । ततो 'वृत्तम्' । वृत्तमिति च निपात्यते ॥ किं निपात्यते ? ॥ [2]णेर्निष्ठायां लोपो निपात्यते॥ किं प्रयोजनम् ? ॥ नियमार्थम् । अत्रैव णेर्निष्ठायां लोपो भवति नान्यत्र ॥ क्व मा भूत् ? ॥ कारितम् हारितम् ॥ इहापि तर्हि प्राप्नोति—वर्तितमन्नम् , वर्तिता भिक्षेति । ततः 'अध्ययने' । अध्ययने चेद्वृत्तिर्वर्त्तत इति ॥*॥ वृधिरमिश्रधीनामुपसङ्ख्यानं सार्वधातुकत्वात् ॥*॥ वृधिरमिश्रधीनामुपसङ्ख्यानं कर्तव्यम् ॥ किं कारणम् ? ॥ 'सार्वधातुकत्वात्' । वर्धन्तु त्वा सुष्टुतयो गिरो मे । वर्धयन्त्वित्येवं प्राप्ते । बृहस्पतिष्ट्वा सुम्ने रम्णातु । रमयत्वित्येवं प्राप्ते । अग्ने शर्द्ध महते सौभगाय । शर्धयेति प्राप्ते ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् ॥*॥ वृधिरमिश्रधीनामार्द्धधातुकत्वात्सिद्धम् ॥*॥ [ वृद्धिरमिश्रधीनामार्द्धधातुकत्वात्सिद्धम् ] ॥

प्र.]पेधो,निर्वृत्तस्य प्रतिषेद्धुमशक्यत्वात्। एतच्च प्रयोजनं 'पूर्वस्मादपि विधौ स्थानिवद्भाव' इत्यनाश्रित्योक्तम् । सप्तमे योगविभाग इति । 'णेरध्ययने वृत्त'मिति योगं विभज्य योगत्रयं क्रियते । क्रमविपर्ययश्चाऽऽश्रीयते । 'णे'रित्येको योगः । तत्र 'निष्ठायां ने'डिति वर्त्तते । ततो 'वृत्त'मिति द्वितीयो योगो णिलोपनियमार्थो गुणप्रतिषेधार्थश्च,अनेकप्रयोजनत्वान्निपातनानाम्। अथवा वृत्तं वृत्तमित्येकशेषाश्रयणादेकस्य नियमार्थत्वमपरस्य गुणनिषेधार्थत्वं भविष्यति । ततो'ऽध्ययन' इति तृतीयो योगो वृत्तशब्दस्याऽर्थविशेषनियमार्थः। रम्णात्विति । व्यत्ययेन श्नाप्रत्ययः ॥

उ.]णिलोपे कृते प्रतिषेधेन निवृत्तिस्तस्य कथं नेत्यत आह—इटि त्विति।इटि परतो णिलोपे क्रियमाणे इत्यर्थः । अनाश्रित्योक्तमिति । तदाश्रयणे हि णिलोपस्य स्थानिवत्त्वेनैकाचः परत्वाऽभावादिण्निषेधाऽप्राप्तेः पूर्वं णिलोपेऽपि दोषाऽभावात् । कालावधारणार्थं सेङ्ग्रहणं व्यर्थं सत्तदनित्यत्वं ज्ञापयतीति भावः । एकाच इति । [एकाच' इति] विहितविशेषणं चाऽनाश्रित्येदमित्यपि बोध्यम् । वस्तुत 'एवं तर्हि नार्थः सेङ्ग्रहणेने'ति भाष्यस्य 'तत्र सूत्रे विहितविशेषणा'दिति शेषः । तदुत्तरं भाष्यं त्वेकदेश्युक्तिरिति बोध्यम् । क्रमविपर्ययश्चेति । 'वृत्त'मित्येतदन्ते श्रुतमपि मध्ये संबन्धनीयमित्यर्थः । ननु णिलोपनियमेन कृतार्थो योगः कथं गुणप्रतिषेधं कुर्यादत आह—अनेकेति । ननु गुणाऽभावे विधेये संभवति कथं नियमार्थतेत्यस्वरसादाह—अथवेति । अर्थविशेषेति । 'वृतेरप्यध्ययन एव नान्यत्रे'ति। [निष्ठायां] ॥

१ क्वचिन्न । २ 'णे'रिति क्वचिन्न । ३ इदं भाष्यमित्यन्ये । ४ इदं वार्त्तिकमिति मते इयं व्याख्या बोध्या । इदं क्वचिन्नास्ति । ५ 'वाऽऽश्रित्य ।

कथमार्द्धधातुकत्वम् ? ॥ [ ॥*॥ उभयथा छन्दसीतिवचनात् ॥*॥] अन्येऽपि हि धातुप्रत्यया उभयथा छन्दसि दृश्यन्ते । [ निष्ठायां सेटि ] ॥

अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ६।४।५५ ॥

किं पुनरयं क्त्नुराहोस्विदित्नुः॥ कश्चात्र विशेषः? ॥*॥ क्त्नाविटि णेर्गुणवचनम् ॥*॥ क्त्नौ सतीटि णेर्गुणो वक्तव्यः । गदयित्नुः स्तनयित्नुः । अस्तु तर्हीत्नुः ॥*॥ इत्नौ प्रत्ययान्तरकरणम् ॥*॥ यदि इत्नुः प्रत्ययान्तरं कर्तव्यम् । ॥*॥ अयादेशे चोपसङ्ख्यानम् ॥*॥ अयादेशे चोपसङ्ख्यानं कर्तव्यम् ॥ उभयं क्रियते न्यास एव । [ अयामन्ताल्वा ] ॥

प्र.] अयामन्ता । किं पुनरिति। यद्यपि क्त्नावयामन्ताल्वाय्येत्न्विष्णुष्विति निर्देशानुपपत्तिस्तथाऽपि युक्ताऽयुक्तत्वापेक्षो विचारः । कः प्रत्यय आश्रयितुं युक्तः, को न युक्त इति ? । अथवा किं कृतेडागमः क्त्नुरिह निर्दिष्टोऽथ प्रत्यय एवेत्नुरिति विचारः । क्त्नाविटीति । 'स्तनिहृषी'त्यत्र यदि क्त्नुर्विधीयते तदा तस्येटि कृतेऽनिटीति वचनाण्णिलोपो नास्ति । कित्त्वात्तु गुणप्रतिषेधे प्राप्ते गुणो विधेयः । इत्नाविति । 'स्तनिहृषी'त्यत्रेत्नुर्विधेयः । कृहनिभ्यां क्त्नुर्विधेयः । यदा तु स्तन्यादिभ्यः क्त्नुर्विधीयते स एवोत्तरत्रानुवर्त्तते तदा प्रत्ययान्तरं न विधेयम् । स्वरेऽपि भेदो नास्त्युभयथाऽन्तोदात्तत्वात् । अयादेशे चेति। णिलोपस्य प्रसङ्गात्।उसङ्ख्यानशब्देनात्र सूत्रे पाठ उच्यते न लपूर्वं वचनम् । भाष्यकारो गुरुलाघवमनादृत्य

उ.] अयामन्ता । नन्विह निर्देशेनैवाऽसंदेहात्प्रश्नानुपपत्तिरित्याह--यद्यपीति । कः प्रत्यय इति । उर्णादिव्याकरणान्तरे किं क्त्नुः प्रत्ययोऽथेत्नुरिति विचार्यत इत्यर्थः । नन्वेतत्सूत्रमुपादाय विचारे क्रियमाणेऽत्रैव सन्देहो युक्त इत्यत आह--अथवेति । कित्त्वात्त्विति । तच्च कृत्नुरित्यादौ गुणप्रतिषेधायाऽऽवश्यकमिति भावः । गुणे विधेय इति । अत्र सूत्रे 'इत्नु' इति न पठनीयमिति भावः । उभयथाऽन्तोदात्तत्वादिति । क्त्नौ प्रत्ययस्वरेणेत्नुचि चित्स्वरेणेति भावः । परे त्विदं सूत्रमप्ययादेशानुवादकं लाघवात् । तदनुवादाच्च णिलोपबाधनम्, अन्यथाऽनुवादत्वाऽसंभवात्। अत्र सूत्रे निमित्तत्वेनाऽऽश्रयणाण्ण्यन्तेभ्यो यथाप्रयोगमन्तादिप्रत्ययकल्पनं,ढकि लोप इत्यत्र ढक्कल्पनवत्। तदाह भाष्ये--क्त्नाविटीति।सूत्रस्यानुवादत्वनिर्वाहाय सूत्रकृतोऽपि तस्याऽऽवश्यकत्वमिति तदेवास्तु । अत्र सूत्रे च इत्नुग्रहणं न कार्यमिति भावः । व्याकरणान्तरे च तथैव कृतम् । णेरेव स्थानेऽयादेशे तु तदंशेऽनुवादत्वभङ्ग इत्याशयः । प्रत्ययान्तरम्—व्याकरणान्तरपठितात्प्रत्ययादन्यत् । अयादेशे चेति । तदनुवादके शास्त्र इत्यर्थः । णिलोपाऽभावायेति

१ लुप्तं स्यात् । २ 'यदि हि क्त्नुः' 'अस्तु तर्हि' इत्नुः । ३ कार्यम् । ४ 'उणादिषु'।

## ल्यपि लघुपूर्वस्य ॥ ६।४।५६ ॥

॥*॥ ल्यपि लघुपूर्वस्येति चेद्व्यञ्जनान्तेषूपसङ्ख्यानम् ॥*॥ ल्यपि लघुपूर्वस्येति चेद्व्यञ्जनान्तेषूपसङ्ख्यानं कर्तव्यम् । प्रशमय्य गतः। प्रतमय्य गतः। ॥*॥ अल्लोपे च गुरुपूर्वात्प्रतिषेधः ॥*॥ अल्लोपे च लघुपूर्वात्प्रतिषेधो वक्तव्यः। प्रतिचिकीर्ष्य गतः। प्रजिहीर्ष्य गतः ॥*॥ ल्यपि लघुपूर्वादिति वचनात्सि-

प्र.]यथान्यासं समर्थयितुमाह–उभयमिति।यद्यत्र लुग्रहणमयादेशार्थं क्रियते स्तन्यादिभ्यश्च क्त्वुर्विधीयते तदा स्यादेव लाघवम् । [ अयामन्ता ] ॥

ल्यपि ल । केचिदाचार्येण लघुपूर्वस्येति षष्ठ्यन्तमध्यापिताः । अन्ये तु लघुपूर्वादिति पञ्चम्यन्तम् । तत्र षष्ठीमाश्रित्याऽऽह—ल्यपीति । प्रशमय्येति । शमेर्णिचि वृद्धौ 'मितां ह्रस्व' इति ह्रस्वः । तत्र णेः पूर्वं व्यञ्जनं न लघ्वित्ययादेशो न प्राप्नोति । न चात्र व्यवहितेऽपि पूर्वशब्दो वर्तत इति शक्यमाश्रयितुम् । चकास्दरिद्रादीनामपि ण्यन्तानामयादेशप्रसङ्गात् । प्रचकास्य गत इति । न चाऽव्यवहिते संभवति व्यवहितं पूर्वमाश्रयितुं युक्तम् । ततश्च प्रगणय्य प्रस्तनय्येत्यादावेव स्यात् । अत्र ह्यलोपस्याऽसिद्धत्वाल्लघुपूर्वो णिर्भवति । अथापि व्याश्रयत्वादल्लोपस्यासिद्धत्वं न स्यात् , एवमपि भूतपूर्वगत्या लघुपूर्वताश्रयोऽयादेशः स्यात् । अल्लोपे चेति । अल्लोपे कृते यो गुरुपूर्वस्तस्मात्परस्य णेर्भूतपूर्वा लघुपूर्वतामाश्रित्याऽयादेशः प्राप्नोति । लघूपूर्वादिति वचनादिति । लघुपूर्वादिति पञ्च-

उ.]भावः। अत्र सूत्रे निमित्तत्वेनाऽऽश्रयणेनापूर्वस्य तस्य कल्पनादस्योपसङ्ख्यानत्वव्यवहारो भाष्ये । अन्यथा सूत्रे पाठस्य निर्विवादत्वेन–'सूत्रे कः प्रत्ययो निर्दिष्ट' इति सन्देहे प्रत्ययान्तरकरणमेव दोषो न तु सूत्रेऽकरणमपि दोष इति कैयटोक्तव्याख्यायां न भाष्यसामञ्जस्यम्।क्त्नोस्तु व्याकरणान्तरपठितस्यानुमतिमात्रं नापूर्वमुपसङ्ख्यानमिति भावः । उभयं क्रियत इति । अत्र पाठस्तेन प्रत्ययान्तरं च बोध्यत इत्यर्थः । कृञः सर्वधात्वर्थानुवादकत्वात् । एतेन यद्यत्रेत्यादि कैयटोक्तमपास्तम् । तेनैषां पङ्कजादिवद्योगरूढत्वं सूचितम् । अन्तोदात्तादयश्चैते सूत्रे पठ्यन्त इति न स्वरभेद इत्याहुः । [ अयामन्तात्वा ] ॥

ल्यपि लघु।अग्रिमवार्तिकानुसारात्सूत्रे पञ्चम्यन्तपाठनिर्णयेनाऽऽद्यवार्तिके षष्ठ्यन्तानुवादो न युक्तोऽत आह–केचिदिति । लघुः पूर्वो यस्मात्तस्य णेर्ल्यप्ययादेश इत्यत्र पक्षेऽर्थः । मितां ह्रस्व इति । अमन्तत्वान्मित्त्वम् । न चात्र व्यवहित इति । उत्तरांशविकलायास्तस्मादिति परिभाषाया दुर्वारत्वादिति भावः । यद्वक्ष्यति–'न चाव्यवहित' इति । दूषणान्तरमाह–चकास्त्विति । भाष्ये दोषान्तरमाह–

१ 'पूर्वात्' । २ 'प्रचि' । ३ कचित्र ।

द्धम् ॥*॥ ल्यपि लघुपूर्वादिति वक्तव्यम् । एवमपि ह्रस्वयलोपाल्लोपानामसिद्धत्वाल्ल्यपि लघुपूर्वादित्ययादेशो न प्राप्नोति।प्रशमय्य गतः प्रतमय्य गतः प्रबेभिदय्य गतः प्रचेच्छिदय्य गतः प्रगदय्य गतः प्रस्तनय्य गतः ॥ *॥ ह्रस्वादिषु चोक्तम्॥*॥ [ह्रस्वादिषु चोक्तम् ] ॥ किमुक्तम् ?॥ समानाश्रयवचनात्सिद्ध'मिति ॥ कथम् ? ॥ णावेते विधयो, णेर्ल्यप्ययादेशः ॥

विभाषाऽऽपः ॥ ६।४।५७ ॥

॥*॥ इडादेशस्य[२] प्रतिषेधः ॥*॥

इडादेशस्य[३] प्रतिषेधो वक्तव्यः । अध्याप्य गतः ॥*॥ आपः सानुबन्धकनिर्देशादिङि सिद्धम्[४] ॥*॥ आपः सानुबन्धकस्य[५] निर्देशः करिष्यते । आप्लृ इति । तेनेङादेशस्य न भविष्यति॥ स तर्हि सानुबन्धकनिर्देशः कर्तव्यः ?॥ न कर्तव्यः॥कथमध्याप्य गतः?॥ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं[६] न

प्र.]म्यन्तं पठितव्यमित्यर्थः।लघुः पूर्वो यस्मादिति लघुपूर्वस्तस्मात्परस्य णेरयादेशः। एवमपीति । क्व तर्हि स्यात् । मृदमाचष्ट इति णिच्,प्रकृत्यैकाजिति प्रकृतिभावाट्टिलोपप्रतिषेधः 'प्रमृदय्य गत' इत्यादौ स्यात् ॥ [ ल्यपि लघुपूर्वात् ] ॥

विभाषा। अध्याप्येति । क्रीङ्जीनां णावित्यात्त्वम्।अर्तिह्रीत्यादिना पुगागमः। सानुबन्धकनिर्देशादिति । आपुलिति पठितव्यमित्यर्थः । आप्लृशब्दात्पञ्चम्येकवचने ऋकारलृकारयोः सवर्णविधिरिति ऋत उदित्युत्वमुरणरपर इत्यत्र प्रत्याहारग्रहणाल्लपरत्वम् । भाष्यकारस्त्वसंदेहार्थमविभक्तिकत्वमाश्रित्याऽऽह–'आप्लृ

उ.]अल्लोपे चेति । पञ्चम्यन्तपाठे यथा व्यञ्जनान्तेषु न दोषस्तथा सूत्रार्थप्रदर्शनव्याजेनाऽऽह–लघुः पूर्वो यस्मादिति । अत्रोभयत्राप्यव्यवहित एव गृह्यत इति 'प्रतिचिकीर्ष्य गत' इत्यादावपि न दोषः । न च वर्णग्रहणे जातिग्रहणाद्दोष एवाऽत्रेति वाच्यम् । जातिग्रहणेनाऽनेकग्रहणेऽपि वर्णद्वयस्यैव ग्रहणेनाऽदोषात् । अत एव 'सनि मीमे'त्युत्तरं 'दम्भ इच्च' 'आप्ज्ञप्यृधा'मिति दम्भेरपीस्–ईत्त्वाभ्यां संयोगादिलोपनलोपाभ्यां सिद्धे दम्भ इच्चेति इत्त्वविधानं चरितार्थम् । इस्भावे हि सन्भेति वर्णत्रयसत्त्वेन कित्त्वाऽनापत्तेरित्याहुः । न चैवं 'निपात एके'ति सूत्रस्थ 'अ इ उ अपेही'ति भाष्यविरोधः , तत्र 'अ इ उ' इति त्रयाणां सत्त्वादिति वाच्यम् । तत्रापि तद्घटकद्वयोरेवाऽऽपाद्यत्वात् । क्व तर्हि स्यादिति । विषयान्तराऽभावाद्वचनसामर्थ्येन ह्रस्वादीनामसिद्धत्वं बाध्यत इति प्रश्नः। [ ल्यपि लघुपूर्वात् ]॥

विभाषाऽऽपः। असंदेहार्थमिति । आपुलिति क्रिमाङ्पूर्वस्य पुल महत्त्वे

१ लुप्तं स्यात् । २ क्वचिन्न । ३ वार्त्तिकमिदमित्यन्ये । ४ 'कस्य नि' । ५ 'न्धकनिर्दे' । ६ ... कतिपय ।

भविष्यति । इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य चतुर्थे पादे द्वितीयमाह्निकम् ॥

## स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ ६।४।६२ ॥

भावकर्मणोरिति[1] कथमिदं विज्ञायते भावकर्मणोर्थे स्यादय इति; आहोस्विद्भावकर्मवाचिनि परतो ये स्यादय इति ? ॥ किंचातः ? ॥ यदि विज्ञायते 'भावकर्मणोर्थे स्यादय' इति, सीयुड्विशेषितः,स्यसिच्तासयोऽविशेषिताः। अथ विज्ञायते 'भावकर्मवाचिनि परतो ये स्यादय' इति, स्यसिच्तासयो विशेषिताः सीयुडविशेषितः । उभयथाऽपि[2] चिण्वद्भावोऽविशेषितः ॥ यथेच्छसि

प्र.]इति । लक्षणप्रतिपदोक्तयोरिति । लाक्षणिकस्यानुमेयरूपत्वाद्विलम्बितप्रतीतिगोचरत्वात् । प्रतिपदोक्तस्य तु प्रत्यक्षत्वादविलम्बितप्रतीतिविषयत्वात् । आकृतौ च पदार्थ इयं परिभाषा न व्यक्तौ।तत्र हि सर्वस्यां व्यक्तौ लक्षणेन प्रवर्तितव्यम्।इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य चतुर्थे पादे द्वितीयमाह्निकम्॥

स्यसिच्सी । कथमिति । किं भावकर्मणोरित्यभिधेयनिर्देशो—'भावकर्मणोर्थे वर्त्तन्ते स्यादय' इति, अथ भावकर्माभिधायी प्रत्ययो भावकर्मभ्याममिधीयते,—'भावकर्मवाचिनि प्रत्यये परतो ये स्यादय' इति?। तत्राऽऽद्ये पक्षे भावकर्मशब्दस्य मुख्यार्थवृत्तित्वम्। द्वितीये तु गौणार्थता । युगपत्तु गौणमुख्यार्थवृत्तित्वाऽसंभव इति मत्वा प्रश्नः । यदि विज्ञायत इति । यदि प्रसिद्ध्यनुरोधेन[3] मुख्यार्थपरिग्रहः । सीयुड्विशेषित इति । आर्द्धधातुक इति वर्तते । न च सीयुट आगममात्रस्याऽऽर्द्धधातुकसंज्ञाऽस्तीति सामर्थ्यात्सीयुडाद्यार्द्धधातुकं गृह्यते । तस्य च संभवति भावकर्माभिधायित्वमित्यर्थः । स्यसिच्तासय इति । भावकर्तृकर्मणां लादेशार्थत्वेन शास्त्रे व्यवस्थापितत्वाद्विकरणानामतदर्थत्वात् । अथेति । अथ भूयसामनुग्रहाय यदि गौणार्थत्वसंश्रयणमिति भावः । सीयुडविशेषित इति । तत्र सीयुटः प्रत्ययै-

उ.]इत्यस्याविऽभक्तिको निर्देश उताऽऽऽप्लृधातोरिति सन्देहनिवृत्त्यर्थमित्यर्थः।आकृतौ चेति । इदमयुक्तमित्यसकृदावेदितम् ॥इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते षष्ठस्याध्यायस्य चतुर्थे पादे द्वितीयमाह्निकम् ॥६।४।२॥

स्यसिच्सीयुट् । नन्वर्थद्वयपरिग्रहमाश्रित्य तृतीयपक्षोऽपि किं नोद्भावितोऽत आह—युगपत्त्विति। ननु सीयुट आगमत्वाद्भावकर्मवृत्तित्वाऽसंभव इति कथं सीयुटो विशेषितत्वमत आह—आर्द्धधातुक इति । शास्त्रे—सार्वधातुके यगितिसूत्रस्थभाष्ये । स्यादीनां साधारणत्वेन तद्द्योतकत्वमपि नेति भावः । ननु मुख्ये संभवति गौणग्रहणमन्याय्यमत आह—भूयसामिति । अविशेषित इति । भावकर्मणोरित्य-

१ कश्चित् । २ 'उभयथा' । ३ 'प्रसिद्धान्' ।

तथाऽस्तु । अस्तु तावद्भावकर्मणोर्ये स्यादय इति ॥ ननु चोक्तं—'सीयुड्विशेपितः स्यसिच्तासयोऽविशेषिता' इति ॥ स्यसिच्तासयश्च विशेषिताः ॥ कथम् ? ॥ भावकर्मणोर्यग्भवतीत्यत्र स्यादयोऽप्यनुवर्तिष्यन्ते ॥

अथवा पुनरस्तु 'भावकर्मवाचिनि परतो ये स्यादय' इति ॥ ननु चोक्तं—'स्यसिच्तासयो विशेषिताः सीयुडविशेषित' इति ॥ सीयुट् विशेपितः ॥ कथम् ? ॥ भावकर्मवाचिनि परतः सीयुण्नास्तीति कृत्वा भावकर्मवाचिनि सीयुटि कार्यं विज्ञास्यते ॥

अथेड्वेत्युच्यते कस्यायमिड्भवति ? ॥ अङ्गस्येति वर्तते ॥ यद्येवमा-

प्र.]कदेशत्वात्समुदायावयवयोः पौर्वापर्याऽभावात्।आगमे ह्युपजाते सागमकस्य प्रत्ययादयः संज्ञाः। अर्थाभिसंवन्धश्च, न तदवयवस्येति सीयुटो भावकर्मवाचिप्रत्ययपरताऽसंभवः सत्यप्यवयवयोः पौर्वापर्ये । अतोऽनन्तरं क्वचित्पाठः—'उभयथाऽपि चिण्वद्भावोऽविशेषत' इति । तत्र न दोषान्तरोपन्यासः, किं तर्हि, पक्षद्वये दोषोपसंहारः । अन्यतरपक्षपरिग्रहे सर्वविषयाऽव्यापनादविशेषितश्चिण्वद्भाव इत्यर्थः।

स्यादयोऽपीति। स्याद्यनुवृत्तेरिदमेव प्रयोजनं—भावकर्मणी स्यादीनामप्यभिधेये यथा स्यातामिति । यथा च द्वन्द्वपदानि प्रत्येकं समुदायार्थवाचीनि तथा स्यादयो लादेशाश्च भावकर्मणी अभिदधतीति न कश्चिद्दोषः।भावकर्मवाचिनि सीयुटीति। तन्त्रन्यायाश्रयणादेकं भावकर्मग्रहणं भिन्नेन रूपेण यथासंभवं स्यादिभिः संवध्यते। अथवा विषयसप्तम्येषाऽऽश्रीयते।भावकर्मविषयेषु स्यादिषु चिण्वत्कार्यं भवतीति नास्ति दोषस्यावकाशः।कस्यायमिति।स्यादीनामागमसंवन्धे षष्ठ्यनिर्देशात्प्रश्नः।स एवाऽऽह—अङ्गस्येति वर्तत इति । प्रकरणस्य नियोजकत्वं चेदाश्रीयते तदाऽनिष्टप्रसङ्ग

उ.]नेन विशेषणेनेति भावः।भाष्ये—चिण्वद्भावोऽविशेषित इति । चिण्वद्भावविषयः सर्वोऽविशेषित इत्यर्थः। ननु भावकर्मणोर्यगित्यत्र स्यादीनामनुवृत्तावपि कथमत्रेष्टसिद्धिरत आह—स्याद्यनुवृत्तेरिति । 'ये स्यादयो विहितास्ते भावकर्मणोर्भवन्ती'ति वाक्यभेदेन सम्वन्ध इति भावः । ननु लादेशैरेव तयोरर्थयोरुक्तत्वात्पुनस्तेषां तदभिधायकत्वं व्यर्थमित्यत आह—यथा चेति । अन्यथा स्यादीनामानर्थक्यात्प्रयोग एव न स्यादिति भावः । समुदायार्थेति । परस्परसमभिव्याहारात्साहित्यरूपार्थवाचीनीति भावः । अभिदधतीति । द्योतयन्तीत्यर्थः । नन्वेकस्य शब्दस्य सामानाधिकरण्यं वैयधिकरण्यं च युगपन्न संभवतीत्यत आह—तन्त्रन्यायेति । अत्र पक्षे स्यसिच्सीयुतासिष्विति द्वन्द्वानुपपत्तेराह—अथवेति । भावकर्मविषयेष्विति । भावकर्मविषयकज्ञानजनकज्ञानविषयेष्वित्यर्थः । ननु स्यादीनां श्रुतत्वादिष्टत्वाच्च तेषामेव स्यात्, किं प्रश्नेनेत्यत आह—स्यादीनामिति । स एवेति । न तु

दितं इड्भ्रामोति।अडाड्वत्। तद्यथाडाटौ टित्त्वादादितो भवतस्तद्वत्॥एवं तर्हि स्यादीनामेवं भविष्यति ॥ एवमपि षष्ठ्यभावान्न प्राप्नोति ॥ ननु च भावकर्मणोरित्येषा षष्ठी ॥ नैषा षष्ठी ॥ किं तर्हि ?॥ अर्थनिर्देश एषा सप्तमी। भावे चार्थे कर्मणि चेति ॥ एवं तर्हि भावकर्मणोरित्येषा सप्तमी स्यादिष्विति सप्तम्याः षष्ठीं प्रकल्पयिष्यति–तस्मिन्निति निर्दिष्टे पूर्वस्येति ॥ एवमपि न सिध्यति ॥ किं कारणम् ?॥ न ह्यर्थेन पौर्वापर्यमस्ति ॥ अर्थेऽसंभवात्तद्वाचिनि शब्दे कार्यं विज्ञास्यते ॥ एवमपि सीयुटो न प्राप्नोति ॥ एवं तर्हि

---

प्र.]इत्यर्थः। अथवाऽङ्गस्येति वर्त्तत इति सिद्धान्तवादिवचनम्। अङ्गस्य निमित्तं यत्तस्येडागम इत्यर्थः। इतरस्त्वङ्गमेवानेनाऽऽगमित्वेनोक्तमिति मत्वाऽऽह–यद्येवमिति। षष्ठ्यभावादिति। इच्छामात्रेण स्यादीनामागमित्वमलभ्यमित्यर्थः।

ननु च भावकर्मणोरित्येषा षष्ठीति।षष्ठीनिमित्तत्वात्षष्ठीत्युच्यते।यथा 'नड्वलोदकं पादरोगः'। इह 'भावकर्मवाचिनि परतो ये स्यादय' इति शब्देन शब्दस्य पौर्वापर्यसंभवात्तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपतिष्ठत इत्यस्ति भावकर्मणोरित्यस्य षष्ठीप्रक्लृप्तौ निमित्तभावः। इतरस्तु भावकर्मणोरित्यभिधेयसप्तमीं मत्वाऽऽह–नैषा षष्ठीति। इतरः स्वाभिप्रायं प्रकाशयितुमाह–एवं तर्हीति। भावकर्मवाची प्रत्यय उपचाराद्भावकर्मशब्दवाच्यः परत्वेन सप्तम्या प्रतिपादित इति सप्तमी स्यसिच्सीयुट्तासिष्विति सप्तम्याः कार्यातिदेशे चरितार्थायाः षष्ठीं प्रकल्पयति।चोदको यथोक्तमभिप्रायमप्रतिपद्याऽऽह–न सिध्यतीति। तत्र हि निःशब्दस्य प्रयोजनं–शब्दे सप्तमीनिर्दिष्टे परिभाषोपस्थानं यथा स्यादर्थे मा भूत्। शब्दश्च शब्दाद्बहिर्भूतोऽर्थस्त्ववहिर्भूतः। निःशब्दो वहिर्भाववाची। पूर्वोक्तेनैवाभिप्रायेणाऽऽह–अर्थेऽसंभवादिति। एवमपीति। नहि सीयुटो भावकर्मवाचिना प्रत्ययेन पौर्वापर्यमस्ति, सीयुटस्तदवयव-

---

उ.]सिद्धान्ती। श्रुतानां षष्ठ्यन्तत्वाऽभावेनाऽऽगमित्वे प्रमाणाऽभावात्। श्रुतेर्विनियोजकत्वाऽभावे प्रकरणस्य विनियोजकत्वमाश्रीयत इत्यर्थः। एवं व्याख्याने ग्रन्थच्छायाभङ्गं मत्वा प्रकारान्तरेण व्याचष्टे–अथ वेति। इच्छामात्रेणेति। श्रुत्यादिभिः प्रमाणैरेव शेषत्वलाभो न तु केवलेच्छयेत्यर्थः। कथं पुनर्भावकर्मणोरित्यस्य षष्ठीनिमित्तत्वमत आह–इहेति। ननु सप्तमीनिर्देशसामर्थ्यात्षष्ठीप्रक्लृप्तिर्न स्यादत आह–कार्यातिदेश इति। 'स्यादिषु परतोऽज्झनादीनां चिण्वत्कार्यं भवती'ति पूर्ववाक्ये चरितार्था सप्तमीति भावः। अर्थे मा भूदिति। 'जनपदे लु'बित्यादौ यथा। असत्यामपीति। आर्द्धधातुकस्येत्युपस्थाने प्रत्यासत्त्याऽऽर्द्धधातुकपदेन स्यादीनामेव ग्रहणात्स्यादय इटा संवध्यन्ते। सीयुड्विषये च सीयुडादि गृह्यत इति

---

१ 'अङ्गस्यादितः'। २ 'भवतः'। ३ एवः क्वचिन्न। ४ 'द्भावकर्मवाचिनि शब्दे'।

सप्तमे योगविभागः करिष्यते । 'आर्द्धधातुकस्येट्' । यावानिण्णाम स सर्व आर्द्धधातुकस्येड्भवतीति । ततो 'वलादेः' । वलादेरार्द्धधातुकस्येड्भवतीति । यद्येवं स्यसिच्सीयुट्तासिष्विड्भवति एवमपि चिण्वद्भावोऽविशेषितो भवति॥ तत्र को दोषः ? ॥ स्यसिच्सीयुट्तासिष्विड्भवत्यज्झनग्रहदृशां वा चिण्वदिति क्वचिदेव चिण्वद्भावः स्यात् ॥ एवं तर्हि स्यादीनेवापेक्षिष्यामहे— 'स्यसिच्सीयुट्तासिष्विड्भवति । अज्झनग्रहदृशां वा चिण्वत्स्यादिष्वि'ति ॥

अथ के पुनरिममिटं प्रयोजयन्ति?॥ येऽनुदात्ताः॥अथ य उदात्तास्तेषां कथम् (? ॥) सिद्धं तेनैव परत्वात् (?।)।उदात्तेभ्योऽपि वाऽनेनैवेडेपितव्यः॥

प्र.]त्वात् । आर्द्धधातुकस्येडिति। परिभाषेयं क्रियते। यत्रेड्विधीयते तत्राऽऽर्द्धधातुकस्येत्युपतिष्ठते । तेन स्यादीनामेवाऽसत्यामपि षष्ठीप्रक्लृप्ताविड्भविष्यति। 'रुदादिभ्यः सार्वधातुक' इत्यत्र विरोधादार्द्धधातुकस्येति नोपतिष्ठते। यद्येवमिति । स्यादीनामागमविधावुपयोगात्पुनः श्रुत्यभावादविशेषितश्चिण्वद्भावः । आर्द्धधातुकग्रहणे ह्युपतिष्ठमाने तेन स्यादीनां विशेषणादागमसंवन्धयोग्यषष्ठ्युपादानादयमर्थः स्यात् ,- 'अज्झनग्रहदृशां वा चिण्वद्भवति यत्र क्वचित् । यत्र तु स्यादयः सन्ति तेषामि'डिति । यथा 'कर्तुः क्यङ् सलोपश्चे'त्यत्रेति भावः । स्यादीनेवेति । तेषामेव श्रुतत्वात्तत्परित्यागेनाऽश्रुतकल्पनाया अयुक्तत्वात्, प्रत्ययापेक्षत्वादङ्गस्येति सप्तमीनिर्देशसामर्थ्याद्वा चिण्वद्भावे पूर्वमुपयुक्तानां स्यादीनामार्द्धधातुकोपस्थानसामर्थ्यात्पश्चादिटा संवन्धः। के पुनरिति।सर्वेभ्य इष्यते न च प्राप्नोतीति मत्वा प्रश्नः । स एव पराभिप्रायमाशङ्कते—येऽनुदात्ताः।अथ ये उदात्तास्तेषां,कथं सिद्धं तेनैव परत्वादिति । किमेवं भवान्मन्यत इत्यर्थः । ततः सिद्धान्तवाद्याह—उदात्तेभ्योऽपीति। अथवा शिष्याचार्यदेशीययोः के पुनरित्यादिके प्रश्नप्रतिवचने परत्वादित्यन्ते। आचार्य आह—उदात्तेभ्योऽपीति । उदात्तग्रहणं चोपलक्षणम् । ऋद्धनोः स्य इत्य-

उ.]भावः। अविशेषितश्चिण्वद्भाव इति।तद्विषयो हनादिरित्यर्थः। नन्विट्संनियोगेन विधीयमानश्चिण्वद्भावस्तत्रैव भवेन्न यत्र क्वचिदित्यत्राऽऽह—यथा कर्तुरिति। अन्वाचयशिष्टश्चिण्वद्भाव इत्यर्थः। प्रत्ययापेक्षत्वादङ्गस्येति । अङ्गसंज्ञाया इत्यर्थः। अजादीनामङ्गानां चिण्वद्भावविधानात्प्रत्ययाकाङ्क्षायां प्रत्ययानां संनिहितानामेव योग्यत्वात्संवन्ध इति भावः।एवमागमविधावप्युपयुक्तानां स्यादीनां पश्चाच्चिण्वद्भावेनान्वय इत्युक्तम् । वस्तुतः पूर्वं चिण्वद्भाव उपयुक्तानां पश्चादिटा संवन्धो युक्ततर इति स एव भाष्यार्थ इत्याह—सप्तमीनिर्देशसामर्थ्याद्वेति । अयमत्र भाष्यार्थः—पूर्वं चिण्वद्भावे उपयुक्तानेव स्यादीन् अत्रेड्विधिवाक्ये आर्द्धधातुकपदेनापेक्षिष्यामहे

१ 'भवतीति चिन्त्यं' 'भवति' इति पाठः। २ ... ३ ... ४ ... ५ 'अनु'।

किं प्रयोजनम् ?॥ कारयतेः—कारिष्यते । हारयतेः—हारिष्यते । इटोऽसिद्धत्वा-ण्णेरनिटीति णिलोपो यथा स्यात् ॥ कथं पुनरिच्छताऽपि भवतोदात्तेभ्योऽने-नैवेड्लभ्यो न पुनरनेनास्तु तेन वेति तेनैव स्याद्विप्रतिषेधेन? ॥ नंनु चं नि-त्योऽयम् । कृतेऽपि तस्मिन्प्राप्नोत्यकृतेऽपि प्राप्नोति ॥ नं त्वस्मिन्कृतेऽपि स प्राप्नोति ॥ किं कारणम् ? ॥ अवलादित्वात् । तस्मादनेनैव भविष्यंतीट् ॥

कानि पुनरस्य योगस्य प्रयोजनानि ? ॥*॥ वृद्धिश्चिण्वंद्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति ॥*॥वृद्धिः प्रयोजनम् । चेष्यते चायि-ष्यते । युक् प्रयोजनम् । ग्लास्यते ग्लायिष्यते । हन्तेश्च घत्वं प्रयोजनम् । हनिष्यते घानिष्यते । दीर्घश्चोक्तो यो मितां वा चिणीति,—स च प्रयोजनम् । शमिष्यते । तमिष्यते तामिष्यते ॥*॥ इट् चासिद्धस्तेन मे लुप्यते णिर्नित्य-

प्र.]नुदात्तेभ्योऽपीड्विधानात् । तुल्यत्वान्न्यायस्य तेभ्योऽप्यनेनैवेड्विधिः।इटोऽसिद्ध-त्वादिति । ततश्चाऽनिटीति प्रतिषेधाऽभावात्सिध्यति णिलोपः । अपि चेट्संनियो-गेन विधीयमानश्चिण्वद्भावोऽपि सिर्ध्यति । अन्यथैतदभावे चिण्वद्भावो न स्यात् । संनियोगशिष्टानामन्यतराऽभावे द्वितीयाऽभावात् । अन्वाचये तु विज्ञायमाने स्या-च्चिण्वद्भावः । यथा कर्तुः क्यङ् सलोपाऽभावेऽपि । नित्योऽयमिति । वलादित्वा-नपेक्षणात् । आकृतिपक्षे च शब्दान्तरत्वाऽभावाच्छब्दान्तरप्राप्त्याऽपि नास्त्य-नित्यत्वम् । भावकर्मार्थापेक्षणादस्य बहिरङ्गत्वमिति चेत्तस्यापि वलादित्वापेक्षत्वा-न्नास्त्यन्तरङ्गत्वमित्यदोषः ।

कानि पुनरिति। किं प्रकरणाद्व्यवस्थाश्रयणादाङ्गान्येव कार्याणि प्रयोजनान्य-

उ.]इति। स एवेति। न तु सिद्धान्तवादी, हेयत्वादस्य पक्षस्येति भावः। तुल्यत्वा-न्न्यायस्येति । यथोदात्तेभ्यो नित्यत्वादयमेवेड्भवति तथा 'ऋद्धनोः स्ये' इत्यादि-विषयेऽप्यनेनेट्, तस्यापि वलादिलक्षणत्वादिति भावः । फलान्तरं दर्शयति—अपि चेडिति । अन्वाचये त्विति । असति तात्पर्यग्राहक एकचकारप्रयोगे समु-च्चयस्यैव प्रतीतेः स युक्त इति भावः । ननु वलादिलक्षण इटि सतीडादेः प्राप्नोत्य-सति तद्रहितस्येति शब्दान्तरप्राप्त्याऽयमनित्योऽत आह—आकृतिपक्षे चेति । व्यक्तिपक्षे हि स न्याय इति भावः । वस्तुतस्तोऽत्र लक्ष्यानुसारात्कृताऽकृतप्रसङ्गि-त्वमात्रेणाऽनित्यत्वाङ्गीकार इति बोध्यम् । तस्यापि वलादित्वेति । अर्थकृतबहि-रङ्गत्वस्यानाश्रयणाच्चेत्यपि बोध्यम् । इतर इति । प्रकरणाद्व्यवस्थामाश्रित्येत्यर्थः । चिण्वदित्यस्य—चिण्वद्भावप्रयोजनमित्यर्थः । विघातीत्यस्य—अनित्य इत्यर्थं दर्श-

१ क्वचिन्न । २ 'वेडेषितव्यः' । ३ श्लोकवार्त्तिकम् । ४ 'भवति' ।

श्चायं वल्निमित्तो (ऽ) विघाती ॥*॥ इटोऽसिद्धत्वाण्णेरनिटीति णिलोपो यथा स्यात्॥ कथं पुनरयं नित्यः?॥ कृताकृतप्रसङ्गित्वात् । कृताकृतप्रसङ्गी ह्ययम्। कृतेऽपि तस्मिन्निटि सासमिक'आर्द्धधातुकस्येड्वलादेः'इति पुनरनेनायं भवति। [ निमित्तस्याऽविहतत्वात् ] । अस्मिंस्तु विहिते वलादित्वस्य निमित्तस्य विहतत्वात्सासमिको न भवति । तस्य निमित्तं विहतं भवति । अयं तस्य निमित्तं विहन्ति, तस्मादयं नित्यः । स त्वस्य निमित्तं न विहन्ति ॥

अथोपदेशग्रहणं किमर्थम् ? ॥*॥ चिण्वद्भाव उपदेशवचनमृकारगुणस्य-बलीयस्त्वात् ॥*॥ चिण्वद्भाव उपदेशवचनं क्रियते ॥ [ किं कारणम् ? ॥] 'ऋकारगुणस्य बलीयस्त्वात्' । कारिष्यते । परत्वाद्गुणे कृते रपरत्वे

प्र.]थाऽविशेषेणेति प्रश्नः।इतर आज्ञान्येवोदाहरति–वृद्धिरिति।विघातीति। अस्मिन्निटि सति वलादिलक्षणस्येटो वलादित्वाभावादप्रवृत्तिलक्षणो विघातस्ततस्तस्यानित्यत्वमित्यर्थः । अथवा वल्निमिमित्त इडविघाती–अस्येटोऽप्रतिवन्धक इत्यर्थः। ऋकारगुणस्येति । अन्येषां तु गुणोऽजन्तत्वं न विहन्तीति नित्यत्वाच्चिण्व-

उ.]यति–अस्मिन्निटीति। अथवेति। अकारप्रश्लेषः कार्य इति भावः। एवं चाऽऽद्ये 'वल्निमित्ते' इत्यस्याऽनित्य इति शेषः। तस्य हेतुर्विघातीति। अस्य–'अय'मिति शेषः। कर्तरि णिनिः, तद्वक्ष्यति क्वचिद्भाष्ये–'अयं तस्य निमित्तं विहन्ती'ति। अन्त्ये तु यतो वल्निमित्तोऽस्याऽविघाती–एनं न विहन्तीत्यतोऽयं नित्य इत्यर्थः । तद्वक्ष्यति–'स त्वस्य निमित्तं न विहन्ती'ति । अन्यतरपक्षेऽन्यदार्थं वोध्यम् । अन्ये त्वत्रायं वार्तिकार्थः–"वृद्धिः–अन्त्यवृद्धिरुपधावृद्धिश्च । इडिति । इड्ढ प्रयोजनं दध्यादौ। चाऽसिद्ध इत्यत्रोपस्थितत्वादिडेव गृह्यत" इत्याहुः। 'ऋकारे'ति विशेषणकृत्यमाह–अन्येषामिति । ऋकारान्तगुणस्तु प्रसङ्गावस्थायामेव रपरत्वादजन्तत्व(स्यं) विघातक इति भावः।न चोपदेशग्रहणे कृतेऽप्युपदेशे योऽच् तदन्तस्येत्यर्थे चायिष्यत इत्यादावप्यनुपपत्तिः । उपदेशे योऽच् तदन्तत्वाऽभावात् । एवं कारिष्यत इत्यादावपि दोषः । उपदेशे यदजन्तमित्यर्थस्तु ण्यन्तेऽनापत्त्या कर्तुमशक्यः। न च ण्यन्ते लोपप्रवृत्तावल्विधौ स्थानिवत्त्वाऽभावादुपदेशे योऽच् तदन्तत्वमपि दुरुपपादम् । णिलोपातपरत्वेनाऽऽर्द्धधातुकस्येतीड्प्राप्त्या तं नित्यत्वेन बाधित्वा चिण्वदिट एव प्रवृत्तेरदोषात् । विप्रतिषेधे आभीयाऽसिद्धत्वाऽभावेन णिलोपातपर-

१'अविघाती'।२ 'कथमयं'।३ अयंपाठः क्वचिन्न।४अस्य स्थाने–"अस्मिंस्तु कृते न स भवति। विहतनिमित्तत्वात् । स वलादेरित्युच्यते । अनेन कृत इटि तस्य वलादित्वं निमित्तं विहतं भवति । अयं तस्य निमित्तं विहन्ति तस्मादयं नित्यः । स त्वस्य निमित्तं न विहन्ति" इति क्वचित्पाठः । ५ 'स्यस्य' । ६ 'आज्ञाने' इति शेषः ।

घानजन्तत्वाच्चिण्वद्भावो न प्राप्नोति ॥ उपदेशग्रहणाद्भविष्यति ॥*॥ वधिभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन ॥*॥ वधिभावात्सीयुटि चिण्वद्भावो भवति विप्रतिषेधेन । वधिभावस्यावकाशः—वध्यात् वध्यास्ताम् वध्यासुः । चिण्वद्भावस्यावकाशः—घानिष्यते अघानिष्यत । इहोभयं प्राप्नोति—घानिषीष्ट घानिषीयास्ताम् घानिषीरन् । चिण्वद्भावो भवति [1]विप्रतिषेधेन ॥ अथेदानीं चिण्वद्भावे कृते पुनःप्रसङ्गविज्ञानाद्वधिभावः कस्मान्न भवति ? ॥ 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति कृत्वा ॥*॥ हनिणिङादेशप्रतिषेधश्च ॥*॥ हनिणिङादेशानां च प्रतिषेधो वक्तव्यः । हनिष्यते घानिष्यते । एष्यते आयिष्यते । अध्येष्यते अध्यायिष्यते । लुङीति

प्र.]द्भावः सिध्यति—चायिष्यते लाविष्यत इति भावः। परत्वादिति।द्वयोरप्यनित्यत्वात् । वधिभावादिति । ननु चाऽऽर्द्धधातुक इति विषयसप्तम्याश्रयणादन्तरङ्गो वधिभावः । नैतदस्ति । लिङीति[2] विशेषनिर्देशात् परसप्तमी । तद्विशेषणत्वादार्द्धधातुक इत्यपि परसप्तमी। यत्र तु विशेषनिर्देशाऽभावोऽस्तेर्भूरित्यादौ तत्रैव विषयसप्तमीविज्ञानं भव्यादिसिद्ध्यर्थम् । एकाच उपदेशेऽनुदात्ता'दित्यत्र तु वक्ष्यति भाष्यकारः—'वधिषीष्टेत्यत्र निपातनस्वरं प्रत्ययस्वरो बाधिष्यते । आर्द्धधातुकीयाः सामान्येन भवन्ती'ति । एवं ब्रुवता लिङीति[2] विषयसप्तम्येवाभ्युपगता । ततश्चान्तरङ्गत्वाद्वधिभावः प्राप्नोति , प्रतिपदविधेर्बलीयस्त्वाच्चिण्वद्भावो भवति ।

हनिणिङादेशप्रतिषेधश्चेति । '[3]लुङ्पर आर्द्धधातुके विधीयमाना हनिणिङा-

उ.]त्वादस्यैव प्रवृत्तेश्चेति वाच्यम् , 'अतो लोप' इत्यत्रेवाऽऽर्द्धधातुकोपदेशे यदजन्तमित्यर्थेनाऽदोषात् । तत्रेवाऽत्राप्यावृत्त्या सीयुटादिविशेषणत्वं चेत्यदोषात्।द्वयोरपीति । चिण्वत्त्वे कृते वृद्ध्या बाधाद्गुणोऽनित्यः । भव्यादिसिद्ध्यर्थमिति । भव्यं प्रवेयमाख्येयमित्यादौ । अन्यथाऽस्त्यादीनामनजन्तत्वादचो यदनापत्तिरिति भावः । प्रतिपदविधेरिति । चिन्त्यमिदम् । निरवकाशत्वे सत्येव तस्य बलवत्त्वात् । अत्र हन्तेरित्यंशः स्यादिविषये चरितार्थः । सीयुडंशोऽप्यज्ग्रहादिविषये चरितार्थः । किंच वधादेशोऽपि प्रतिपदविहित इति तस्मात्स्यसिच्तासिष्वित्यपि विषयसप्तमीति भाष्याशयः। तद्विषये हनादीनां चिण्वत्कार्यं, कृतेषु तेषु तेषामिडिति सूत्रार्थः । वधिभावादित्युक्तेरन्यादेशविषयधातूनां चिण्वत्त्वविषयेऽनभिधानमिति दिक् । भाष्ये—सकृद्गताविति।न चैवं चिण्वद्भावाऽभावेऽपि वधादेशाऽनापत्तिरित्येवञ्च इति सूत्रस्थवधिषीष्टेति भाष्यप्रयोगानुपपत्तिः। प्रवर्त्तमानेनैव बाधकेन बाध्यबाधो न तु स्वयमप्रवर्त्तमानेनापीति न दोष इति दिक्। ननु यच्चिण्याहत्य विहितं

१ क्वचिन्न । २ 'लुङीति' । ३ 'लुङ्परे' ।

हनिणिङादेशाः प्राप्नुवन्ति ॥*॥ अङ्गस्येति तु प्रकरणादाङ्गशास्त्रातिदेशात्सिद्धम् ॥*॥ [ अङ्गस्येति तु प्रकरणादाङ्गशास्त्रातिदेशात्सिद्धम् ] ॥ आङ्गं यत्कार्यं तत्प्रतिनिर्दिश्यते, न च हनिणिङादेशा आङ्गा भवन्तीति ॥

## आतो लोप इटि च ॥ ६।४।६४ ॥

प्र.] देशाश्चिण्निमित्ता भवन्तीति चिण्वद्भावात्प्राप्नुवन्ति । इह यस्य चिण्साक्षान्निमित्तं निर्दिष्टं तदप्यतिदिश्यते । यथा युगागमः। यस्यापि प्रकारान्तरेणापि निमित्तं चिण्तदपि, यथा वृद्धिरिति,–हनिणिङादेशप्रसङ्गः । अङ्गस्येति तु प्रकरणादिति । अङ्गस्येति तु प्रकृत्य यत्कार्यं विहितं तदतिदिश्यते, तस्यैव प्राकरणिकत्वात् । न च हनिणिङादेशा अङ्गस्येति प्रकृत्य विहिता इति तेषामप्रसङ्गः । [स्यसिच्सीयुट् ] ॥

आतो।इड्ग्रहणं किमर्थमिति।इहाऽचि क्ङित्यार्द्धधातुक इति त्रयाणां प्रकृतत्वाद्विशेषणविशेष्यभावे कामचारात्तेषामन्यतमेनाऽनुभूतविशेषणेनाऽननुभूतविशेषणेन वा इटः समुच्चयसंभवादनेकपक्षसंभवः । तत्र यदि तावद्विशेषणसंबन्धात्प्रागेवाऽचेट् समुच्चीयतेऽङ्गाधिकाराक्षिप्तप्रत्ययविशेषणाच्चाजादौ प्रत्यय इति विज्ञायते तत्रेड्ग्रहणमनजाद्यर्थं विज्ञायते । अजादेरिटोऽजादिना प्रत्ययेन समुच्चयाऽभावात् । तदा क्ङिदार्द्धधातुके अजादेरेव विशेषणे व्यवतिष्ठेते, नेटः । हलादेरिटः क्ङित्वाऽसंभवादार्द्धधातुकत्वव्यभिचाराऽभावाच्च । ततश्च दासीयेत्यादावाल्लोपप्रसङ्गः । अथाऽजादेः प्रत्ययस्य क्ङिदार्द्धधातुकाभ्यां विशेषणाभ्यां प्राक् संबन्धः पश्चादिटा

उ.] युगादि तदेव चिण्वद्भावाद्भवति, न च हनिणिङादेशास्तथा विहिता इति कथं तेषां प्रसङ्गोऽत आह–इहेति। यस्यापीति।चिणि दृष्टस्य सर्वस्यातिदेशादिति भावः। अङ्गस्येति प्रकृत्येति।नतु वस्तुतोऽङ्गस्य विहितानामतिदेश इति भावः।[स्यसिच् ]।

आतो लोपः । इह बहूनां पक्षाणां संभवात्तेषामेकैकस्य परिग्रहे प्रयोजनभेद इड्ग्रहणस्य भवतीति प्रयोजनप्रश्नद्वारेण कतमः पक्षोऽत्र गृह्यत इति प्रश्नपर्यवसानं दर्शयितुमाह–इहाचीति।अन्यतमेन–अचा,क्ङिता,आर्द्धधातुकेन वा। तत्राननुभूतविशेषणेन केनचिदिटः समुच्चय इतरद्वयं यथासंभवं विशेषणत्वेन योज्यमित्याह–तत्र यदीति।अजादेरिट इति। भेदाऽधिष्ठानत्वात्समुच्चयस्येति भावः। अजादेरिटोऽजादिप्रत्ययान्तर्भावादिति तात्पर्यम् । इट्शब्देन चाऽऽगमस्य प्रत्ययस्य सामान्येन ग्रहणमिति बोध्यम् । दासीयेति । दाधातोराशीर्लिङ्यात्मनेपदोत्तमपुरुषे सीयुटि च हलादिरिट्संभवति । तस्य क्ङित्त्वं नास्त्येव, आर्द्धधातुकत्वं चाऽव्यभिचारीति भावः । अथानुभूतविशेषणेनाऽजादिप्रत्ययेनेट्समुच्चय इतीमं पक्षं दर्शयति–अथाजादेरिति । व्यत्यरे इति । रा दाने लङि 'कर्तरि कर्मव्यतिहारे' इत्यात्मने-

१ लुप्त। २ अङ्गस्य। ३ भवन्ति ते। ४ चिण्निमित्तं तद। ५ वत्त्वात्। ६ गेव चेट्।

अथेड्ग्रहणं किमर्थम्? ॥*॥इड्ग्रहणमक्ङिदर्थम्॥*॥ इड्ग्रहणं क्रियते॥ [किं प्रयोजनम्?॥'अक्ङिदर्थम्']॥अक्ङिति लोपो यथा स्यात्। पपिथ तस्थिथेति। ॥*॥ सार्वधातुके चाऽऽदीत्यार्द्धधातुकाधिकारादुपसङ्ख्यानम् ॥*॥ सार्वधातुके चाऽऽदीत्यार्द्धधातुकाधिकारादुपसङ्ख्यानं कर्त्तव्यम्। इषमूर्जमहमित आदि॥ ननु च क्ङितीति वर्त्तमाने यथैवेड्ग्रहणमक्ङिदर्थमेवमार्द्धधातुक इत्यपि वर्तमान इड्ग्रहणं सार्वधातुकार्थं भविष्यति॥ न सिध्यति॥ किं कारणम्?॥ न हि क्ङिताऽचिविशेष्यते 'अचि भवति॥ कतरस्मिन्?॥ क्ङिती'ति॥ किं तर्हि?॥ अचा क्ङिद्विशेष्यते। 'क्ङिति भवति, कतरस्मिन्?॥अची'ति॥किं पुनः कारणमचा क्ङिद्विशेष्यते?॥यथेडप्यज्ग्रहणेन विशेष्येत॥ अस्ति चेदानीं क्वचिदिडनजादिर्यदर्थो विधिः स्यात्?॥अस्तीत्याह।

प्र.]समुच्चयस्तदाऽयमर्थः–'अजादौ क्ङिदार्द्धधातुके इटि चाऽऽकारलोप' इति। तदेड्ग्रहणमनजाद्यर्थमक्ङिदर्थमनार्द्धधातुकार्थं च भवतीति दासीय पपिथ व्यत्यर इति सर्वत्रेव्याती लोपः प्राप्नोति। अथ क्ङिताऽननुभूतविशेषणेनेट् समुच्चीयते तदाऽच्यार्द्धधातुक इति विशेषणद्वयमविशेषाद्भावपि क्ङिदिटावुपनिपततीत्यक्ङिदर्थमेवेड्ग्रहणं विज्ञायते। तेन पपिथेत्यादावाल्लोपो भवति, दासीय व्यत्यरे इत्यनजादौ सार्वधातुके च न भवति। अनुभूतविशेषणद्वयसंबन्धेन क्ङितेटः समुच्चये पूर्ववत्सर्वत्रेव्याल्लोपप्रसङ्गः। अथ त्वार्द्धधातुकेनाऽननुभूतविशेषणेनेटः समुच्चयः– 'आर्द्धधातुके चेटि चे'ति,तदा सार्वधातुकार्थमिड्ग्रहणं विज्ञायत इति व्यत्यर इत्यादावाल्लोपप्रसङ्गः। तदाऽचि क्ङितीति विशेषणद्वयमार्द्धधातुकस्यैव स्यान्न त्विटः। सार्वधातुकस्येटो ङित्त्वाऽजादित्वाऽव्यभिचारात्। अनुभूतविशेषणेनाऽऽर्द्धधातुकेनेटः समुच्चये सर्वत्रेव्याल्लोपप्रसङ्गः। तदेवमनेकपक्षसंभवात्प्रश्नः। इतरः क्ङिताऽननुभूतविशेषणेनेटः समुच्चयं, पश्चाद्द्वयोरपि विशेषणद्वयसंबन्धमाश्रित्याऽऽह—इड्ग्रहणमक्ङिदर्थमिति।आदीति।दाञः केवलादाङ्पूर्वाद्वा'छन्दसि लुङ्लङ्लिट' इति लुङ्लेरन्यतरः। केचिदत्र पदकाराः–आ अदीत्यवगृह्णन्ति। केचित्त्वेकपद्यं मन्यन्ते। तेषामाडागम इति पक्षः। तत्र लुङि च्लेर्मन्त्रे घसेति लुक्। लङि तु च्छान्दस-

उ.]पदोत्तमपुरुषैकवचनमिट्। अदादित्वाच्छपो लुक्। तत्र मध्यमे इष्टो लोपः, आद्यन्तयोस्त्वनिष्टः प्राप्नोतीति दोषः। तदा सार्वधातुकार्थमित्येतदुपपादयति– तदाऽचीति। एषु तृतीयः पक्षो लक्ष्यानुरोधात्सिद्धान्तितो भाष्ये। तदाह–इतरः क्ङितेति। 'दाञः केवलादाङ्पूर्वाद्वे'त्युपपादयति–आ अदीति। आदीत्युत्तमपुरुषैकवचन इटि रूपम्। तत्रावग्रहवादिनामादानमत्रार्थः। अन्येषां दानमर्थः। 'लु-

१ क्वचिन्न। २ आदीति।३ 'ननु च यथैव क्ङितीतिवर्त्तमाने इड्ग्र'। ४ 'अदी'।

दासीय धासीयेति[1] ॥तत्तर्ह्युपसङ्ख्यानं कर्तव्यम् ? ॥ न कर्तव्यम् ॥*॥ आर्द्धधातुकत्वात्सिद्धम् ॥*॥ कथमार्द्धधातुकत्वम् ? ॥*॥ उभयथा छन्दसीति वचनात्॥*॥अन्येऽपि हि धातुप्रत्यया उभयथा छन्दसि दृश्यन्ते ।[आतो लोपः]॥

## घुमास्थागापाजहातिसां हलि ॥ ६।४।६६ ॥

॥*॥ ईत्वे वकार[3]प्रतिषेधो घृतं घृतपावान इति दर्शनात् ॥*॥ईत्वे वकारप्रतिषेधो वक्तव्यः ॥ किं प्रयोजनम् ? ॥ 'घृतं घृतपावान इति दर्शनात्' । इह मा भूत्–घृतं घृतपावानः पिवत वसां वसपावानः पिवतेति ॥

यदि तर्हि वकारे प्रतिषेध उच्यते–कथं धीवरी पीवरीति[1] ?॥*॥ धीवरी पीवरीति चोक्तम् ॥*॥ [ धीवरी पीवरीति चोक्तम् ]॥ किमुक्तम् ?॥ नैतदीत्वम् ॥ किं तर्हि ? ॥ 'ध्याप्योरेतत्संप्रसारण'मिति ।

स तर्हि प्रतिषेधो वक्तव्यः ? ॥ न वक्तव्यः । वनिवेप भविष्यति न क्वनिबिति । [ घुमास्थागापा ] ॥

---

प्र.]त्वाच्छपो लुक्। श्लौ वा सति द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यमिति द्विर्वचनाऽभावः । सिद्धान्ते त्वार्द्धधातुकत्वाच्छवभावः । दासीयेति । इटः सीयुटि कृते तस्य तद्भक्तत्वादजादित्वाऽभावः ॥ [ आतो लोप इटि च ] ॥

घुमास्था । ईत्व इति । वकारस्य निमित्तभावेन प्रतिषेधो वकारप्रतिषेधः । वकारादावीत्वं न भवतीत्यर्थः। घृतं घृतपावान इति । आतो मनिनिति क्वनिप् । वसपावान इति । 'ङ्यापोः संज्ञाछन्दसोर्बहुल'मिति वसाशब्दस्य ह्रस्वः ।

धीवरी पीवरीति चोक्तमिति । 'जनसनखनां सञ्झलो'रित्यत्रोक्तम् । वनिवेप इति। क्वनिप्तु च्छन्दसि दृष्टानुविधानान्न भविष्यति । भाषायामप्यन्येभ्योऽपि दृश्यन्त इति दृशिग्रहणात्प्रयोगानुसरणार्थात्प्रयोगाऽभावात्पादिभ्यो नास्ति क्विनिविति भाष्यकारस्याभिप्रायः । तत्र वार्तिकारम्भो ज्यायानित्याहुः, स्थः क चेति क्विपि संस्था इत्यत्र ईत्वस्याऽदर्शनात्।भाष्यकारमतेन त्वीत्वं प्राप्नोति प्रत्ययलक्षणेन । यथाऽतृणेडित्यत्रेमागमः । [ घुमास्थागापा ] ॥

---

उ.]ल्लुङोरन्यतर' इत्येतद्विशदयति–तत्र लुङीति । [ आतो लोप इटि च ] ॥

घुमास्था । वकारस्य साक्षात्प्रतिषेधेन संबन्धाऽयोगादाह–वकारस्येति । ह्रस्व इति । यद्यपि पदमञ्जर्यां क्वचित्पुस्तकेषु, सांप्रतं पठ्यमानमाध्यन्दिनशाखायां च दीर्घः पठ्यते तथाऽपि क्वचिच्छाखायां ह्रस्वपाठोऽन्वेषणीयः। ननु क्वनिप्यनिष्टरूपनिवृत्तये प्रतिषेध आवश्यकोऽत आह–क्वनिप्त्विति। भाष्यकारमतेन त्विति। प्रत्ययलक्षणसूत्रस्थविध्यर्थत्वे हलादौ क्ङितीति वर्णस्याऽप्राधान्येनाऽऽश्रयणादिति

---

१ क्वचिन्न । २ भाष्यमित्यन्ये । ३ 'वकारे प्रति' । ४ इदं लुप्तं स्यात् । ५ 'सारणमिति' ।

न माङ्योगे ॥ ६।४।७४ ॥

कस्यायं प्रतिषेधः ? । आटः प्राप्नोति । अटोऽपीष्यते । तत्तर्ह्यटो ग्रहणं कर्तव्यम् ? ॥ न कर्तव्यम् । प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? ॥ 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति ॥ यदि तर्हि तदनुवर्तते–'आडजादीनाम्' 'अट् चे'त्यडपि प्राप्नोति॥ अस्तु। अटि कृते पुनराड्भविष्यति॥इहापि तर्ह्यटि कृते पुनराट्

प्र.] न माङ्योगे। कस्यायमिति। यदि द्वयोरप्यडाटोरिहानुवृत्त्या प्रतिषेधस्ततोऽजादीनामडपि प्राप्नोति,अथाऽऽनन्तर्यादाटः प्रतिषेधस्तथा सति माङ्योगेऽनिष्यमाणोऽप्यड्प्राप्नोतीति मत्वा प्रश्नः । स एवाऽऽनन्तर्यमाश्रित्याऽऽह–आटः प्राप्नोतीति । इतरः समुदायापेक्षायां दोषाभावेऽपि स्वरितत्वादधिकारेऽपि दोषप्रतिविधानसंभवादाह–न कर्तव्यमिति। अडपि प्राप्नोतीति । अडाटोर्युगपदेकागम्यपेक्षायामादित्वं न संभवतीति पर्यायप्रसङ्गो, यथा लेटोऽडाटोः। ततः पक्षेऽटि सति ऐक्षिष्टेत्यादि न सिध्यति । एक्षिष्टेत्याद्यनिष्टं प्राप्नोति । इतरस्तु विकल्पेनाप्यडाटोः प्रवृत्तौ द्रव्ये पदार्थे कृतेऽप्यटि शब्दान्तरत्वान्निमित्तसद्भावाच्चाऽऽटा भाव्यमिति मत्वाऽऽह–अस्त्विति । इतरो यद्येकस्मिन्नागमे कृतेऽपरस्य प्रवृत्तिस्ततो हलादीनामप्यटि कृत आट्प्रसङ्ग इति मत्वाऽऽह–इहापीति । ननु चाऽऽटि कर्तव्येऽटोऽसिद्धत्वादजादि-

उ.]भावः । अत्रेदं चिन्त्यम् । प्रत्ययलक्षणसूत्रं नियमार्थमिति भाष्यमतेऽप्राप्तेः । वस्तुतस्तु क्विप्यपीत्त्वं भवत्येव, सूत्रे हलीत्यस्याऽनजादिपरत्वात् । अत एव 'ध्यायतेः संप्रसारण'मिति वार्तिके 'धीर्ध्यायतेर्दधातेर्वे'ति भाष्यं सङ्गच्छते । शंस्था इत्यत्राम्वाम्वेतिसूत्रस्थसव्येष्ठा इत्यत्र च विजेव।'चेन क्वि'विति तत्सूत्रस्थभाष्ये क्विप्पदेन साहचर्याद्विजेवोच्यत इति चिन्त्योऽयं कैयट इति।एवं च ध्याप्योः संप्रसारणमित्येकदेश्युक्तिरिति बोध्यम् । वस्तुतस्तु वार्त्तिकप्रत्याख्यानयोः फलैक्यायेदशेभ्यः क्विपोऽनभिधानमिति दधातेर्वेति भाष्यमेकदेश्युक्तिरिति । इदमाद्यन्तांशरूपमयुक्तमेव । न च विनिगमनाविरहाद्वैपरीत्यमेव स्यादिति वाच्यम् , अस्य सूत्रद्वयस्योपपत्तिसहितत्वात्तस्य च विपरीतत्वादिति बोध्यम् । धियावित्यादावीत्त्वस्येयङ्यसिद्धत्वं तु न, व्याश्रयत्वादिति जनसनेति सूत्रे भाष्य उक्तम् [ घुमास्थागापा ] ।

न माङ्योगे। यदि द्वयोरपीति । समुदायापेक्षायामनन्तरस्येति परिभाषाऽनुपस्थानादिति भावः। अडपीति । मध्येऽपि संवन्धादिति भावः। स एवेति । ननु सिद्धान्तवादी।तत्तर्ह्यटो ग्रहणं कर्तव्यमित्यन्तं चोदकवचनमिति भावः। व्यवहितत्वादनुवृत्त्ययोगेनाऽड्ग्रहणं कर्तव्यमेवेति तात्पर्यम्।प्रकृतानुवृत्त्या सिद्धमिति वदतः सिद्धान्तिन आशयमाह–इतर इति । द्विविधा ह्यनुवृत्तिः, लौकिकी शास्त्रीया च । तत्राऽऽद्ये परिहारः–समुदायेति । अन्त्य आह–स्वरितत्वादिति । 'एकागम्यपेक्षमादित्व'मिति पाठः । 'एकागम्यपेक्षायामादित्व'मिति पाठे एकागमिनोऽपेक्षायां संवन्धे तदपेक्षमादित्वं न संभवतीति कथंचिद्व्याख्येयम्। द्रव्ये पदार्थ इति । तत्र

प्राप्नोति—अकार्षीत् अहार्षीत् ॥ अड्वचनान्न भविष्यति॥ इहापि तर्ह्यड्वचनान्न स्यात्—ऐहिष्ट ऐक्षिष्ट ॥ आड्वचनाद्भविष्यति ॥ इहापि तर्ह्याड्वचनात्प्राप्नोति अकार्षीत् अहार्षीत् ॥ अकृतेऽटि योऽजादिरित्येवमेतद्विज्ञास्यते ॥ किं वक्तव्यमेतत् ?॥ न हि ॥ कथमनुच्यमानं गंस्यते॥ अड्वचनसामर्थ्यात् । यदि हि कृतेऽटि योऽजादिस्तत्र स्यादज्ग्रहणमनर्थकं स्यात् ॥ अथवोपदेश इति वर्तते।

---

प्र.]त्वाऽभावः । यद्यपि शास्त्रापेक्षयाऽसिद्धत्वं तथाऽपि प्रयोगरूपमाश्रित्य चोद्यते । यथोक्तं—'मार्थादीदाद्यर्थाना'मिति । परिहारान्तरसद्भावाद्वाऽसिद्धत्वं नोक्तम् । अड्वचनादिति । यदि हलादीनामप्यटि कृत आट् स्यात्तदा लुङ्लङ्लृङ्क्ष्वाडागममेव विदध्यात् । इहापि तर्हीति । यद्यटि कृते आण्न भवति ततोऽत्रापि न स्यात् । आड्वचनादिति । यद्याण्न स्यात्तद्विधानमनर्थकं स्यादित्यर्थः । ननु विकल्पितत्वादडाटोरडभाव आड्कर्तव्य इत्यटि सति न प्राप्नोति । नैष दोषः । उत्तरार्थेन नान्तरीयकोपस्थानेन प्रवृत्तेनाप्यटा बाधितुमाटोऽशक्यत्वात् । अथवा सन्दिग्धप्रवृत्तिरडागमोऽसन्दिग्धप्रवृत्तिनाऽऽटा बाध्यत इत्येष वाक्यार्थः । यथाऽन्यत्रोक्तम्-'अन्यवचनाचकाराऽकरणात्प्रकृतस्यापवादो यथोत्सर्गेण प्रसक्तस्ये'ति । इतरस्त्वगृहीताऽभिप्रायो विशेषाऽभावं मत्वाऽऽह—इहापि तर्हीति । अकृतेऽटीति । अजादिग्रहणसामर्थ्यात्कृते ह्यटि सर्वस्याऽजादित्वादडाटोश्च भेदेन विधानसामर्थ्याद्विषयविभागावसायो—'हलादीनामडेव, अजादीनां तु कृतेऽकृते वाऽऽडि'ति । अथवेति । उपदेशे यान्यजादीनि तेषामाड्भवति । न च करोतिरुपदेशेऽजादिरि-

---

उ ]हि प्रतिलक्ष्यं लक्षणभेदाच्छब्दान्तरत्वे सत्याटा भवितव्यमित्यर्थः।यथोक्तमिति। 'अदसो मा'दित्यत्र । तत्र हीलादीनामसिद्धत्वात्प्रगृह्यत्वाऽभावेनाऽयादिप्रसङ्गे नोदितोऽयं परिहारः । माऽर्थः स्थानी 'म'शब्देनोक्तः । ईदूदर्थश्चेदूच्छब्देन । न चास्यां कल्पनायामसिद्धत्वं भवति, शास्त्रीये ह्यसिद्धत्वमिति तद्भावः । प्रकृतेऽप्यजादीनामित्यस्याजादिप्रयोगरूपाणामित्यर्थे प्रयोगरूपं न शास्त्रीयमिति तात्पर्यम् । ननु मा भूत्तत्राऽसिद्धत्वम् , इह त्वजादेरङ्गस्येति शास्त्रीयमेव रूपं गृह्यत इत्यसिद्धत्वं भवत्येवेत्यत आह—परिहारान्तरेति । सामर्थ्यं विघटयति—ननु विकल्पितेति । सामर्थ्यात्पर्याये विकल्पः फलतीत्याशयेनोक्तम्-उत्तरार्थेनेति। एवं चाटो दुर्बलत्वेन बाधकत्वाऽयोग इति भावः। ननु यद्यट् (इह) दुर्बलस्तदा बलवताऽऽटा तस्य बाधापत्तावट्प्रवृत्तिर्दुर्लभेत्यत आह—अथवेति । उत्तरार्थत्वादेव संदिग्धप्रवृत्तिकत्वं तस्य । एवं चाऽटोऽप्रवृत्तिरेवेति भाष्याशय इति भावः । अन्यत्र—'इको गुणवृद्धी' इत्यादौ । नन्वकृतेऽपि इति विशेषलाभः कथमत आह—अजादिग्रहणेति। भेदेनेति। अन्यथा आटमेव विदध्यादिति भावः। न च करोतिरिति । उपलक्षणमेतत् । करोत्यादिवदिति । हलादीनाम-

---

१ 'विज्ञायते'. २ 'आड्वचन' । ३ 'अड्ग्रहण' अड्वचन । ४ ददर्थश्चेदूदे' । ५ विशदयति ।

अथवाऽऽर्द्धधातुक इति वर्त्तते ॥ अथवा लुङ्लङ्लृङ्क्ष्विति द्विलकारको निर्देशः । लुङादिषु लकारादिषु योऽजादिरिति ॥ सर्वथा ऐज्यत औप्यंतेत्येतन्न सिध्यति ॥ एवं तर्हि ॥*॥अजादीनामटा सिद्धम् ॥*॥ ॥*॥ अजादीनामटेव सिद्धं नार्थ आटा ॥ एवं तर्हि वृद्ध्यर्थमाङ्वक्तव्यः ॥*॥ वृद्ध्यर्थमिति चेदटः ॥*॥ [ वृद्ध्यर्थमिति चेत्- ] अटो वृद्धिं वक्ष्यामि ॥ यदि तर्ह्यटो वृद्धिरुच्यते-॥*॥ अस्वपो हसतीत्यत्र ॥*॥ अस्वपो हसतीत्यत्रापि रुत्वे कृते वृद्धिः प्राप्नोति ॥*॥ धातौ वृद्धिमटः स्मरेत् ॥*॥ धातावटो वृद्धिं वक्ष्यामि॥ तत्तर्हि धातुग्रहणं कर्तव्यम् ? ॥ न कर्तव्यम् । योगविभागः करिष्यते । [ 'अटश्च' ] । अटोऽचि वृद्धिर्भवति । तत [ 'उपसर्गादृति' ] । उपसर्गादृति वृद्धिर्भवति । ततो 'धातौ' । धातावित्युभयोः शेषः ॥ इह तर्हि आटीत् आशीदिति,अतो गुणे इति पररूपं प्राप्नोति ॥*॥ पररूपं गुणे नाटः॥*॥'पररूपं गुणेऽटो ने'ति वक्ष्यामि ॥ तत्तर्हि वक्तव्यम् ? ॥ ॥*॥ ओमाङोरुसि तत्समम् ॥*॥ यद्यप्येतदुच्यतेऽथवैतर्ह्युस्योमाङ्क्ष्वाटः पररूपप्रतिषेधश्चोदितः स न वक्तव्यो भवति ॥ छन्दोऽर्थे तर्ह्याङ्वक्तव्यः । आरैगु कृष्णा । त्रित एनमायुनक् । सुरुचो वेन आवः ॥*॥ छन्दोऽर्थं बहुलं दीर्घम् ॥*॥ बहुलं छन्दसि

---

प्र.]त्याडभावः । अथवाऽऽर्द्धधातुक इति वर्त्तत इति । तेनाऽऽर्द्धधातुकसंज्ञकलकारोत्पत्तिकाले योऽजादिस्तस्याऽऽड्भवति । सर्वथेति । करोत्यादिवदजादीनामटि सत्याडभावादित्यर्थः । असिद्धवदत्राऽऽभादित्यत्राऽसिद्धत्वप्रत्याख्यानाय सर्व एवामी प्रकारा उक्ताः,इह तु स्थित एवासिद्धत्व एषामुपन्यासः। अस्वप इति । स्वपेर्लङ् सिप अङ्गार्ग्यगालवयोरित्यट्।शब्लुक्। सकारस्य रुत्वं। हशि चेत्युत्त्वम् । तत्राऽऽद्गुणं बाधित्वा वृद्धिः प्राप्नोति । आटीदिति । नेटीति वृद्धौ प्रतिषिद्धायां परत्वाद्वृद्धिं बाधित्वा पररूपं प्राप्नोति। पररूपं गुणे नाऽट इति । अट उत्तरे गुणे पररूपं नेति वक्तव्यमित्यर्थः । ओमाङोरुसि तत्सममिति । औङ्कारीयदौढीयदौस्रीयदित्यत्र वृद्धिं बाधित्वा परत्वादोमाङोश्च उस्यपदान्तादिति पररूपं प्राप्नोति, तस्य

---

उ.]ङेवेति व्यवस्थापनात् । स्थित एवेति । प्रतिपत्तिलाघवार्थमारब्धेऽपि सूत्र इत्यर्थः । आटीदित्युपलक्षणम् , आटदित्यादिलङोऽपि । न वक्तव्यमित्यस्य-'गौरवावहमेतद्वक्तव्यं न, यत ओमाङोरुसि यत्प्रतिषेधवचनं तेन तुल्यमेतद्वचन'मिति योजनां दर्शयन्व्याचष्टे—औङ्कारीयदिति । अटश्चेति

---

१ 'लुङ्लङिति'। 'लृङ्क्ष्विति'। २ 'इति न'। ३ 'श्लोकवार्त्तिकम्'। ४ लुप्तम्। ५ 'वृद्धिः प्राप्नोति रोरुत्वे कृते'। ६ 'रूपत्वं'। ७ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः' । ८ 'दीर्घः' । ९ 'छन्दसि दीर्घो बहुलं दृश्यते' ।

दीर्घत्वं दृश्यते । तद्यथा–पूरुषः नारक इति ॥ एवं तर्हि आयन् आसन्,–इणस्त्योर्यण्लोपयोः कृतयोरनजादित्वाद्वृद्धिर्न प्राप्नोति ॥*॥ इणस्त्योरन्तरङ्गतः ॥*॥ [इणस्त्योः] अन्तरङ्गत्वाद्वृद्धिर्भविष्यति।तस्मान्नार्थ आङ्ग्रहणेन ॥

॥*॥ अजादीनामटा सिद्धं वृद्ध्यर्थमिति चेदटः ।
अस्वपो हसतीत्यत्र धातौ वृद्धिमटः स्मरेत् ॥१॥
पररूपं गुणे नाट ओमाङोरुसि तत्समम् ॥
छन्दोऽर्थं वहुलं दीर्घमिणस्त्योरन्तरङ्गतः ॥*॥

**अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥ ६।४।७७ ॥**

॥*॥ इयङादिप्रकरणे तन्वादीनां छन्दसि वहुलम् ॥*॥ इयङादिप्रकरणे तन्वादीनां छन्दसि वहुलमुपसङ्ख्यानं कर्तव्यम् । तन्वं पुषेम, तनुवं पुषेम ।

---

प्र.] प्रतिषेधो वक्तव्य इत्युक्तम्।यदा तु पररूपविधौ 'नाऽट' इत्युच्यते तदोस्योमाङ्क्ष्वाटः पररूपप्रतिषेधो न वक्तव्य इति तुल्यमेतद्भवति नतु गौरवप्रसङ्गः । अन्तरङ्गत्वादिति । यण्लोपौ हि वहिरङ्गौ। वृद्धौ कृतायामिणो यण्–एरिति योगविभागाश्रयणाद्यणोऽभावः । रूपाश्रयत्वादन्तादिवद्भावोऽपि नास्ति । ताद्रूप्यानतिदेशात् । 'श्नसोरल्लोप' इति तपरकरणाल्लोपाऽभावः । एतच्च 'वार्णादाङ्गं वलीय' इत्यनाश्रित्योक्तम्। तदाश्रये हि वृद्धिं वाधित्वा यण्लोपौ स्याताम् । अटा सिद्ध आड्वचनमेव ज्ञापकमन्ये वर्णयन्ति–'भवत्येषा परिभाषा वार्णादाङ्गं वलीय' इति । तस्यां हि सत्यां यण्लोपयोर्वृद्धिं वाधित्वा प्रवृत्तयोरायन्नासन्निति न स्यादित्याड्विधीयते ।

अचि । तन्वमिति । वा च्छन्दसीत्यधिकारादमि पूर्वत्वाऽभावाद्यणादेशः । तनुवमिति । अधातुत्वादप्राप्त उवङ्विधीयते । विष्वमिति । विसूत इति 'सत्सू-

---

उ.] पुनर्विधानार्थेन चेन तस्यैवाऽस्यापि सिद्धिरिति भावः । नतु गौरवप्रसङ्ग इति । 'आङजादीना'मित्यस्याऽकरणात् । 'अटश्चे'त्यत्र मात्राहानेर्लाघवमप्यस्ति । वहिरङ्गाविति । प्रत्ययाश्रयत्वात् । यणोऽभाव इति । ततश्चाऽऽयादेशे रूपं सिद्धमिति भावः । ताद्रूप्येति । अन्तादिवर्णमात्रवृत्तिधर्मस्यानतिदेशादित्यर्थः । अनाश्रित्येति । लक्ष्यानुसारादनाश्रयणम् , अयुगपत्प्राप्तेर्वा। इङस्त्वध्यैयातामित्यादेर्लोकेऽनभिधानम् , पक्षयोः फलभेदाऽऽपत्तेरित्याहुः । निरूपितं चेदमिङ्धातौ शब्देन्दुशेखरे । अन्य इति । अत्रारुचिवीजं तु भाष्यविरोधः । [न माङ्योगे]॥

अचि श्नु।ननूवङ्भावपक्षे पूर्वरूपं स्यादत आह–वा छन्दसीति।पूर्वसवर्णदीर्घोऽप्यत एव न। तत्र वहृचानां यणादेशेन पाठः।यजुर्वेदिनान्तूवङ्विशिष्ट इति वोध्यम्। विसूत इति । क्विपि गतिकारकोपपदानमिति सुवुत्पत्तेः पूर्वं समासेऽपदादित्वादा-

---

१ श्लोकवार्त्तिकम् । २ लभं स्याम् । ३ 'व्यवच्छिद्...' । ४ क्वचिन्न ।

विष्वं पश्य, विषुवं पश्य । स्वर्गं लोकम्, सुवर्गं लोकम् । त्र्यम्बकं यजामहे, त्रियम्बकं यजामहे [ अचि श्नुधातुभ्रुवां ] ॥

## एरनेकाचोऽसंयोगपूर्वस्य ॥ ६।४।८२ ॥

अथेह कस्मान्न भवति ब्राह्मणस्य नियौ ब्राह्मणस्य निय इति?॥*॥अङ्गाधिकारात् ॥*॥ अङ्गस्येति वर्तते ॥ एवमपि परमनियौ परमनिय 'इत्यत्रापि प्राप्नोति॥ 'गतिकारकपूर्वस्यैवेष्यते [यणादेशः'] ॥*॥ स्वरपदपूर्वोपधस्य च यणादेशः ॥*॥ [यणादेशः] स्वरपूर्वोपधस्य पदपूर्वोपधस्य चेति वक्तव्यम्, स्वरपूर्वा च यस्योपधा पदपूर्वा च । स्वरपूर्वा—निन्यतुः निन्युः । पदपूर्वा—उन्न्यौ उन्न्यः। उन्न्यौ उन्न्यः।उभयपूर्वा—ग्रामण्यौ ग्रामण्यः।सेनान्यौ सेनान्यः॥

॥*॥असंयोगपूर्वे ह्यनिष्टप्रसङ्गः॥*॥असंयोगपूर्वस्येति(हि)उच्यमानेऽनिष्टं प्रसज्येत ।उन्न्यौः उन्न्यः। उन्न्यौ उन्न्यः।असंयोगपूर्वस्येति प्रतिषेधः प्रसज्येत॥

---

प्र.]द्विषे'ति क्विप्।अत्र नित्यमोः सुपीति यणि प्राप्ते पक्ष उवङ्विधीयते। सुवर्गमिति। अधातुत्वादनङ्गत्वाच्चाऽप्राप्त उवङ्विधीयते । [ अचि श्नुधातुभ्रुवाम् ] ॥

एरने । ब्राह्मणस्य नियाविति । 'अन्येभ्योऽपि दृश्यत' इति ताच्छील्यादिषु नियो निरुपपदात्क्विप् । ततः कर्मणा सम्बन्धः । सत्यपि वा पूर्वं कर्मणा सम्बन्धे परत्वात्सोपपदं सत्सूद्विषेति क्विपं बाधित्वा ताच्छीलिकः क्विब्भवति । गतिकारपूर्वस्येति । परशब्दोऽत्र न गतिर्न च कारकं, किं तर्ह्युत्तरपदार्थस्य समानाधिकरणं विशेषणम् । उन्न्याविति । भावे कर्तरि वाऽत्र क्विप् । ईकारः संयोगपूर्वः । धातोरिति । अविद्यमानधात्ववयसंयोगपूर्वस्य यणित्यर्थः । उपस-

---

उ.]देशप्रत्यययोरिति षत्वं विष्वं विषुवमित्यत्रेति बोध्यम्। [अचिश्नुधातुभ्रुवाम् ]॥

एरने । ननु सत्सूद्विषेति सोपपदे क्विप्युपपदसमासे ब्राह्मणनियावित्येव स्यादत आह—अन्येभ्योऽपीति। परत्वादिति । ताच्छील्याद्यविवक्षायां सोपपदस्यावकाशः । निरुपपदस्य धात्वन्तरमवकाश इति भावः। गतिकारकपूर्वस्यैवेति नियमः,सपूर्वपदस्य चेद्गतिकारकपूर्वस्यैवेष्यते न तु गतिकारकपूर्वभिन्नस्येष्यत इत्यर्थः । तेन निन्यतुरित्यादि सिध्यति । एतेन यण्विध्येकवाक्यतापन्नत्वान्नाऽयं नियम इत्यपास्तम्। एवकारस्यानन्वयापत्तेश्च । इयं भाष्यकृत इष्टिः । इदानीं वार्तिकं व्याचष्टे—स्वरपदेत्यादि । भाव इति । संपदादित्वात्।कर्तरि 'क्विप्चे'त्यनेन । पश्चाद्विशेषणसमासः। 'पदपूर्वे'त्यत्र पदशब्देन धात्ववयवत्वानधिकरणस्य ग्रहो बोध्यः । तेनोन्नीशब्दादा-

---

१ 'विस्वं' 'विसुवं'। २ 'इह'। ३'पूर्वस्येष्यते' । ४ 'चः' क्वचिन्न । ५ क्वचिन्न । ६ 'स्वरपूर्वोपधस्य'।७'पदपूर्वोपधस्य'। ७ 'उभयकृतम्' । ['उभयपूर्वोपधस्य'] ।

तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । धातोरिति वर्त्तते । तत्र धातुना संयोगं विशेषयिष्यामः, 'धातोर्यः संयोगस्तत्पूर्वस्य ने'ति ॥ उपसर्जनं वै संयोगो, न चोपसर्जनस्य विशेषणमस्ति ॥ धातोरित्यनुवर्त्तनसामर्थ्यादुपसर्जनस्यापि विशेषणं भविष्यति ॥ अस्त्यन्यद्धातोरित्यनुवर्त्तनस्य प्रयोजनम् ॥ किम् ? ॥ इवर्णं विशेषयिष्यामः ॥ नैतदस्ति प्रयोजनम् । यद्यधातोरिवर्णं, भवितव्यमेव तस्य यणादेशेनेको यणचीति । [यथा—कुमार्यौ कुमार्य इति ]॥

वर्षाभ्वश्च ॥ ६।४।८४ ॥

॥*॥ वर्षाभूपुनर्भ्वश्च ॥*॥ वर्षाभू इत्यत्र पुनर्भ्वश्चेति वक्तव्यम् ।

---

प्र.]र्जनमिति।अन्यपदार्थं प्रति। न चोपसर्जनस्येति।सम्बन्धिशब्दादन्यदुपसर्जनं पदं पदान्तरवाच्येनार्थेन संबन्धं नोपैतीत्यर्थः। अस्त्यन्यदिति । गुणप्रधानसन्निधौ प्रधानस्य सत्यर्थित्वे विशेषणसंबन्धेन भाव्यम् ,अनर्थित्वे प्रधानस्य गुणो विशेषणेन संबध्यते । यद्यधातोरिति । यथा कुमार्याविति । ननु 'मणी' 'पाणी' इत्यादावधातोः पूर्वसवर्णबाधनाऽर्थो यण्मा भूदिति धातुनेवर्णस्य विशेषणे प्रयोजनमस्ति । एवं तर्हीयङ्बाधनार्थत्वाद्यणादेशस्याऽधातोरियङोऽप्रसङ्गादधातुनिवृत्त्यर्था धातुग्रहणानुवृत्तिर्न भवति । [ एरनेकाचो ] ॥

वर्षा । वर्षासु भवति, वर्षा वा भवते प्राप्नोतीति वर्षाभूरोषधिविशेषः ।

---

उ.]चारक्विवन्तात्कर्तरि क्विपि न यण्।अत एव प्रत्याख्यानेन न विरोधः।तस्याऽनभिधानमित्यन्ये। एतद्वचनारम्भेऽपि परमनियावित्यादावतिप्रसङ्गवारणाय भाष्यकारेष्टिरावश्यकी । तेन स्वरपूर्वग्रहणं प्रत्याख्यातप्रायमेव । पदपूर्वग्रहणमपि प्रत्याख्यातुमाह—तत्तर्हीत्यादि । सम्बन्धिशब्दादिति,—गमकस्योपलक्षणम् । गुणप्रधानेति । इवर्णं प्रति प्राधान्येनान्वयसंभवे संयोगविशेषणत्वमन्याय्यमिति वक्तुं युक्तम् । भाष्यस्यापीवर्णं धातुं प्रति विशेष्यत इत्यर्थः । पूर्वसवर्णदीर्घबाधनार्थ इति । स तु ई ऊ इत्यादौ चरितार्थः । इयङ्बाधनार्थत्वादिति । 'उत्सर्गसमानदेशा अपवादा' इति न्यायादिति भावः । न चायं न्यायः श्नमकज्वहुषु व्यभिचरितः, तेषु—मित्त्वेन,प्राक्टेरिति पदेन,पुरस्तादित्यनेन च तद्बाधेऽप्यन्यत्राऽप्रवृत्तौ मानाऽभावात् । वस्तुतस्तु तदभावे कस्याऽपि नाप्राप्त्यसंभवाद्बाध्यसामान्यचिन्तायां तदपवादत्वमपि संभाव्येत । तस्मादनुवृत्तिसामर्थ्यादिति भाष्यस्य,—निपातानामनेकार्थत्वादावृत्तिसामर्थ्यादित्यर्थः।उक्तार्थमजानानस्य शङ्का—अस्त्यन्यदिति।आचार्यदेशीयस्योत्तरम्—यद्यधातोरिति । [ एरनेकाचो ] ॥

वर्षा । वा भवत इति । वर्षा इति द्वितीयाबहुवचनान्तम् । ओषधिविशेष

---

१ 'त्यनुवृत्तौ'। 'वर्त्तमानस्य'। २ 'विशेष्यते'। ३ 'चीत्येव'। ४ कचित्। ५ 'पुनर्भ्वश्चेति'।

पुनर्भ्वौ पुनर्भ्वं इति ॥

अत्यल्पमिदमुच्यते ॥*॥ वर्षादृन्कारपुनःपूर्वस्य भुवः ॥*॥ वर्षादृन्कारपुनःपूर्वस्य भुव इति वक्तव्यम् । वर्षाभ्वौ वर्षाभ्वः । दृन्भ्वौ दृन्भ्वः । कारभ्वौ कारभ्वः । पुनर्भ्वौ पुनर्भ्वः । [ वर्षाभ्वश्च ] ॥

हुश्नुवोः सार्वधातुके ॥ ६।४।८७ ॥

॥*॥ हुश्नुग्रहणानर्थक्यमन्यस्याऽभावात् ॥*॥ हुश्नुग्रहणमनर्थकम् ॥ किं कारणम् ? ॥ 'अन्यस्याभावात्' । न ह्यन्यत्सार्वधातुकेऽस्ति यस्य यणादेशः स्यात् ॥ ननु चायमस्ति याति वातीति ॥ क्ङितीत्यनुवर्तते ॥ इह तर्हि यातः वात इति ॥ अचीति वर्तते ॥ इह तर्हि यान्ति वान्तीति ॥ य्वोरिति वर्तते ॥ एवमपि धियन्ति पियन्तीत्यत्र प्राप्नोति ॥ ओरिति वर्त्तते ॥ एवमपि युवन्ति रुवन्तीत्यत्र प्राप्नोति ॥ अनेकाच इति वर्तते ॥ एवमप्यसुवन् अनुवन्नित्यत्र प्राप्नोति ॥ एतदप्यटोऽसिद्धत्वादेकाज्भवति ॥ एवमपि प्रोर्णुवन्तीत्यत्र प्राप्नोति ॥ असंयोगपूर्वस्येति वर्तते ॥ [ ॥*॥ यङ्लुगर्थं तु ॥*॥] यङ्लुगर्थं तर्हि हुश्नुग्रहणं कर्तव्यम् । यङ्लुगन्तमनेकाजसंयोगपूर्वमुवर्णान्तमस्ति तदर्थमिदम् । नदं योयुवतीनाम् । वृषभं [भवतु]रोरुवतीनाम् ॥

प्र.]दृन्भूशब्दोऽन्दूदृन्भू इति निपातितः । अत्र तु भूशब्दस्याऽऽनर्थक्यान्न भूसुधियोरित्यत्र ग्रहणाऽभावाद्यणादेशः सिद्धः । [ वर्षाभ्वश्च ] ॥

हुश्नु । अधिकारानुवृत्तिसामर्थ्यादतिप्रसङ्गाऽभावं मत्वाऽऽह—हुश्नुग्रहणान-

उ.] इति । भेके तु ह्रस्वान्तः । अत एव 'शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलि'रिति स्त्रियामुकारान्तलक्षणङीषन्तं पठन्तीति नारायणः । उतो गुणवचनादेव ङीषो विधानेनाऽत्र व्यर्थं बह्वादित्वकल्पनारूपोपायान्तरस्यैवाऽऽवश्यकत्वाद्भेकेऽपि दीर्घान्त इत्यन्ये । आनर्थक्यादिति । दृभी ग्रन्थ इत्यतः क्रूप्रत्ययो निपात्यते नुमागमश्चेति भावः । न भू इत्यादि । एवं च दृन्पूर्वस्येति निष्फलमिति भावः । यणादेश इति । ओः सुपीत्यनेन। इदं चिन्त्यम् । धातुत्वाऽभावादुवङोऽप्राप्ताविको यणचीत्येव यण्सिद्धेरिति । किं च दृशिति नान्त उपपदे भुवः क्विपि निष्पन्नदृन्भूशब्दार्थं वार्तिके दृन्भूग्रहणस्याऽऽवश्यकत्वाच्चिन्त्यमिदम् । वार्तिके पूर्वग्रहणं परिभाषालब्धार्थानुवाद इति बोध्यम् । [ वर्षाभ्वश्च ] ॥

१ क्वचिन्नेदम् । २ 'सुवन्ति' । 'सुवन्ति नुवन्ति' । ३ 'अयुवन् अरुव' ।
४ इदं लुप्तं । ५ भाष्यटीकासूक्तिरत्नाकरकृदयं शेषनारायणः ।
६ 'युवं योयुवतीनाम्' । ७'अस्तु' ।

॥*॥यङ्लुगर्थमिति चेदार्द्धधातुकत्वात्सिद्धम् ॥*॥ यङ्लुगर्थमिति चेत्तन्न ॥ किं कारणम् ?॥ 'आर्द्धधातुकत्वात्सिद्धम्'॥ कथमार्द्धधातुकत्वम् ? ॥*॥ उभयथा छन्दसीति वचनात् ॥*॥ अन्येऽपि हि धातुप्रत्ययाश्छन्दस्युभयथा दृश्यन्त इति ॥ एवं तर्हि सिद्धे सति यद्धुश्रुग्रहणं करोति तज्ज्ञापयत्याचार्यो-'लङ्लुग्भाषायां भवती'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ बेभिदीति चेच्छिदीतीत्येतत्सिद्धं भवति भाषायामपि । [ हुश्नुवोः सार्वधातुके ] ॥

## ऊदुपधाया गोहः ॥ ६।४।८९ ॥

[अथ] किमर्थं गुहेर्विकृतस्य ग्रहणं क्रियते न पुनर्गुह इत्येवोच्येत ? ॥ ॥*॥ गोहिग्रहणं विषयार्थम् ॥*॥ गोहिग्रहणं क्रियते॥[ किं प्रयोजनम्? ॥ ] 'विषयार्थम्' । विषयः प्रतिनिर्दिश्यते । यत्रास्यैतद्रूपं तत्र यथा स्यात् । इह मा भूत्-निजुगुहतुः निजुगुहुरिति ॥*॥अयादेशप्रतिषेधार्थं च ॥*॥अयादेशप्रतिषेधार्थं च विकृतग्रहणं क्रियते ॥*॥ह्रस्वादेशे ह्ययादेशप्रसङ्ग ऊत्वस्यासिद्धत्वात् ॥*॥ ह्रस्वादेशे हि सत्ययादेशः प्रसज्येत । प्रतिगूह्य गतः उपगूह्य गत इति॥ किं कारणम् ? ॥ 'ऊत्वस्यासिद्धत्वात्' ॥ असिद्धमूत्त्वं, तस्यासिद्धत्वाद्ध्यपि लघुपूर्वादित्ययादेशः प्रसज्येत ॥

---

प्र.]र्थंक्यमिति । भाषायामपीति । ततो यङ्लुङ्निवृत्त्यर्थं हुश्नुग्रहणमर्थवत् ॥

ऊदु । किमर्थमिति । 'लघुं विहाय निर्देशं कस्माद्गौरवमाश्रित'मिति प्रश्नः। गोहिग्रहणमिति। कृतगुणस्योत्त्वं यथा स्यादकृतगुणस्य मा भूदित्येवमर्थमित्यर्थः। अयादेशप्रतिषेधार्थं चेति । गुणे कृते तस्य स्थान ऊत्त्वे कृते सत्यूत्त्वस्याऽसिद्ध-

---

उ.] हुश्नुवोः। भाष्ये-असुवन्नित्यादि । एषैव सिद्धान्त्युक्तिः। असिद्धत्वाऽनित्यत्वज्ञापकमिदं श्नसोरिति तपरत्ववदिति तदाशयः । इत उत्तरमेकदेशिनोरुक्तिः । अत एवान्ते 'इत्येतत्सिद्धं भवती'त्युक्तिः । अन्यथा ज्ञापितेऽपि हुश्नुवोरित्यस्य चारिताथ्र्यायोवर्णान्तेभ्योऽप्यस्य भाषायामावश्यकतयेत्यादि सिद्धं भवतीति वदेत् । एवं चैतत्प्रयोगद्वयातिरिक्तं यङ्लुगन्तं भाषायामसाध्वेव । अत एव क्ङिति चेति सूत्रे रोरवीतीत्यस्य छान्दसत्वमुक्तं भाष्यकृतेति ध्येयम्। किंच 'किमेतस्य ज्ञापने प्रयोजन'मिति प्रश्नस्य लोके उवर्णान्तयङ्लुगन्तप्रयोगाऽदर्शनमेव बीजम्। तत्र तत्प्रयोगाऽदर्शनेनास्योत्तरस्यैकदेश्युक्तित्वमावश्यकम् । यङोऽचि चेति सूत्रे चलभ्यवाक्यभेदलभ्यस्याऽनैमित्तिकयङ्लुको बहुलग्रहणानुवृत्त्या यथाप्रयोगं लोकेऽपि लाभेन ज्ञापकानुपयोगाच्चेति बोध्यम् । [ हुश्नुवोः सार्वधातुके ] ॥

ऊदुप । विषयं दर्शयति-कृतगुणस्येति। अकृतगुणस्येति। क्ङिद्विषय इत्यर्थः।

---

१ क्वचिन्न । २ पूर्ववार्तिकस्मारकं भाष्यमिदमित्यन्ये । ३ 'भाषायामपि यङ्लुग्भवतीति' । ४ लुप्तं स्यात् । ५ क्वचिन्न । ६ 'प्रगूह्य' । ७ क्वचिन्न । ८ 'रित्तयङ्'

विपर्यार्थेन तावन्नार्थो गोहिंग्रहणेन ॥*॥ प्रश्लिष्टनिर्देशात्सिद्धम् ॥*॥ प्रश्लिष्टनिर्देशोऽयम्। उ–ऊत्–ऊदिति। तत्र ह्रस्वस्याऽवकाशः–निजुगुहतुः निजुगुहुः। गुणस्यावकाशः–निगोढा निगोढुम्। इहोभयं प्राप्नोति–निगूहयति निगूहकः। साधुनिगूही। परत्वाद्गुणे कृत आन्तर्यतो दीर्घस्य दीर्घो भवति॥ अयादेशप्रतिषेधार्थेन चापि नार्थः ॥*॥ समानाश्रयवचनात्सिद्धम्॥*॥ समानाश्रयमसिद्धं भवति व्याश्रयं चैतत्॥ कथम्?॥ णावूत्त्वं, णेर्ल्यप्ययादेशः। [ ऊदुपधाया गोहः ]॥

दोषो णौ ॥ ६।४।२० ॥

अथ किमर्थं दुषेर्विकृतस्य ग्रहणं क्रियते न पुनर्दुष इत्येवोच्येत?॥ ॥*॥ दोषिर्ग्रहणे च ॥*॥ [दोषिग्रहणे च] ॥ किम्?॥ अयादेशप्रतिषेधार्थं

प्र.]त्वे गुरुपूर्वादुत्तरो णिर्भवति नतु लघुपूर्वादिति ल्यप्ययादेशो न भवति। 'गुह' इति तु निर्देशे क्रियमाणे नित्यत्वाद्बाधित्वा गुणमुकारस्य स्थान ऊकारः प्राप्नोति, तस्य चासिद्धत्वाल्लघुपूर्वादुत्तरो णिर्भवतीत्यादेशः स्यात्। उ ऊत् ऊदिति।ह्रस्वदीर्घावादेशौ सूत्रे निर्दिश्येते। स्थानेन्तरतमपरिभाषावशाद्ध्रस्वस्य ह्रस्वो दीर्घस्य दीर्घः। निजुगुहतुरिति। अत्र कित्त्वाद्गुणप्रतिषेधादुकारस्याऽऽदेश उकारः। निगोढेति। अचीत्यधिकारादुकारस्याऽत्राऽप्रसङ्गः। निगूहयतीति। उकारस्य गुणश्च प्राप्नोत्युकारश्च। तत्र परत्वाद्गुणे कृत एकदेशविकृतस्यानन्यत्वादूकार आदेश इति नार्थो विकृतनिर्देशेन। दोषो णावित्यत्र तु लक्ष्यदर्शनवशादूकारोऽपेक्ष्यते न तु ह्रस्व इति तत्रापि न दोषः। [ ऊदुपधाया गोहः ]॥

उ.]नित्यत्वादिति।गुणस्त्वनित्यः। ऊत्वे लघूपधत्वाऽभावादप्राप्तेः। ह्रस्वदीर्घाविति। आदेशोऽपि ह्रस्व एवाऽस्तु। भाव्यमानस्योकारस्य सवर्णग्राहकत्वाद्दीर्घस्य दीर्घसिद्धिरिति चेदुपायान्तरत्वाददोष इत्याहुः। परत्वाद्गुण इति। न च ह्रस्वे सावकाशोऽपि दीर्घोऽनवकाशः। ह्रस्वापेक्षयैव विप्रतिषेधविचारात्। दीर्घस्तु गुणात्प्राक्प्राप्नोत्येव न। तदन्तरतमस्थानिनोऽभावात्। उभयनिर्देशसामर्थ्येन स्वस्वसदृशस्थान्याक्षेपात्। 'गुणश्च प्राप्नोत्युकारश्चे'त्येव पाठः। नन्वेवं दोषो णावित्रापि तत्सूत्रवक्ष्यमाणरीत्या 'दुष' इति निर्देशे तेन पर्यायेणोभौ स्यातामत आह—दोषो णाविति। विकृतनिर्देशे तु तत्सामर्थ्यादेव गुणे कृत आदेशः। स चाऽऽन्तरतम्याद्दीर्घ एवेति भावः। [ ऊदुपधाया गोहः ]॥

दोषो णौ। अत्र विकृतनिर्देशस्य विषयार्थत्वं न फलम्। णावित्युक्तेः। अतो भाष्ये—अयादेशप्रतिषेधार्थमिति। [ दोषो णौ ]॥

१ भाष्यमिदमित्यन्ये। २ क्वचिन्न।३ 'दोषो'। ४ 'ग्रहच्च'। ५ लुप्तम्। ६ 'त्यका'।

विकृतग्रहणं क्रियते ॥*॥ ह्रस्वादेशे ह्ययादेशप्रसङ्ग ऊत्वस्यासिद्धत्वात् ॥*॥ ह्रस्वादेशे हि[2] सत्ययादेशः प्रसज्येत । प्रद्रूय्य गतः । उपद्रूय्य गतः ॥ किं कारणम्[3] ? ॥ 'ऊत्वस्यासिद्धत्वात्' । असिद्धसूत्वं तस्याऽसिद्धत्वाल्यपि लघुपूर्वादित्ययादेशः प्रसज्येत ॥ अत्रापि "समानाश्रयवचनात्सिद्ध"मित्येव । समानाश्रयमसिद्धं भवति व्याश्रयं चैतत् । णावूत्वं णेर्ल्यप्ययादेश इति ॥

## चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥ ६।४।९३ ॥

॥*॥ चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे चोपसङ्ख्यानम् ॥*॥ चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे चोपसङ्ख्यानं कर्तव्यम् । शमयन्तं प्रयोजितवान्-अशमि अशामि, शमं शमम्, शामं शामम्, । शंशमयतेः-अशंशमि अशंशामि, शंशमं शंशमम्, शंशामं शंशामम्॥ किं पुनः कारणं न सिध्यति?॥ चिण्णमुलपरे णौ मितामङ्गानां दीर्घो भवतीत्युच्यते,यश्चात्र णिश्चिण्णमुलपरो, न तस्मिन्मिदङ्गं, यस्मिंश्च मिदङ्गं, नासौ णिश्चिण्णमुलपर इति ॥ लोपे कृते चिण्णमुलपरो भवति ॥ स्थानिवद्भावान्न चिण्णमुलपरः ॥ ननु च प्रतिषिध्यते तत्र स्थानिवद्भावो 'दीर्घविधिं प्रति न स्थानिव'दिति ॥ एवमप्यसिद्ध-

---

प्र.] चिण्ण । णिज्व्यवेतानामिति । चिण्णमुलपरे णौ मितामङ्गानां वा दीर्घ उच्यते । तत्र यदा ण्यन्ताद्यङन्ताच्च णिज्विधीयते तदा पूर्वेण णिचा यङ्कारेण च व्यवधानाद्दीर्घो न प्राप्नोतीति वचनम् । प्रयोजितवानिति । यद्यपि चिण्विषयं कर्म प्रदर्शनीयं तथाऽपि णिजुत्पत्तये हेतुव्यापारप्रदर्शनार्थं कर्तुरुपादानं, न त्वत्र कर्ता विवक्षितः । शंशमयतेरिति । शमेर्यङि नुगतोऽनुनासिकान्तस्येति नुकि कृते शंशम्यशब्दाण्णिच्यल्लोपयलोपौ । लोपे कृत इति । यद्यपि परस्यापि णिचो लोपस्तथाऽपि प्रत्ययलक्षणेन भूतपूर्वगत्या वा चिण्णमुलपरो णिः। दीर्घविधिं प्रति

---

उ.] चिण्ण । भूतपूर्वगत्या वेति प्रौढ्या । भाष्ये—दीर्घविधिं प्रतीति । यद्यपि तत्र त्रैपादिकदीर्घस्यैव साहचर्याद्ग्रहणम् , अत एव पूर्वत्रासिद्धीय इत्यवष्टभ्य 'वरेयलोपस्वरवर्जं द्विवर्चनादीनि न कर्त्तव्यानी'ति तत्प्रत्याख्यातं भाष्ये नपदान्तसूत्रे, तथाऽपि लक्ष्यानुरोधात्साहचर्याऽनित्यत्वाच्च न पदान्तसूत्रस्थं 'वरेयलोपस्वरवर्जं'मित्युपलक्षणमिति भावः । 'ण्यन्ताण्णौ ण्याकृतिनिर्देशात्सिद्ध'मिति तु चिन्त्यम् । जातेः पौर्वापर्याऽभावेन चिण्णमुलपर इति विशेषणाऽसङ्गत्याऽत्र जातिग्रहणस्य वक्तुमशक्यत्वात्।स्पष्टं चेदमार्द्धधातुक इति सूत्रे द्वितीयाध्याये कैयटे

---

१ भाष्यमिदमित्यन्ये । २ क्वचिन्न । ३ 'णम् ?, ऊत्वस्याऽसिद्धत्वाल्ल्यपि लघु' । ४अयं पाठः क्वाचित्कः।५'व्यपे'। क्वचिदिदं लुप्तम्।उपसङ्ख्यानपदविकलं च क्वचिदिदं वार्तिकं पठ्यते ।६ क्वचिन्न । ७'णि'रिति क्वचिन्न । ८'विप्रति'।९'अत्र'।१०'द्वा'।

त्वान्न प्राप्नोति ॥ एवं तर्हि,—॥*॥ चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे चान्तरङ्गलक्षणत्वात्सिद्धम् ॥*॥ [ चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे चान्तरङ्गलक्षणत्वात्सिद्धम् ]॥किमिदमन्तरङ्गलक्षणत्वादिति ? ॥ यावद्ब्रूयात्समानाश्रयवचनात्सिद्धमिति । समानाश्रयमसिद्धं भवति व्याश्रयं चैतत् ॥ कथम् ? ॥ णेर्णौ लोपो,णौ चिण्णमुल्परे मितामङ्गानां दीर्घत्वमुच्यते । तस्मान्नार्थ उपसङ्ख्यानेनेति ॥ [ चिण्णमुलोर्दीर्घो ]

छादेर्घेऽद्व्युपसर्गस्य ॥ ६।४।९६ ॥

॥*॥ अद्विप्रभृत्युपसर्गस्य ॥*॥ अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् । इहापि यथा स्यात्—समुपाभिच्छाद इति ॥ तत्तर्हि वक्तव्यम् ?॥ न वक्तव्यम् ॥ यत्र त्रिप्रभृतयः सन्ति द्वावपि तत्र स्तस्तत्राऽद्व्युपसर्गस्येत्येव सिद्धम् ॥ नवा एष लोके संप्रत्ययः। न हि 'द्विपुत्र आनीयता'मित्युक्ते त्रिपुत्र आनीयते। तस्माद्विप्रभृत्युपसर्गस्येति वक्तव्यम् ॥ [ छादेर्घे ] ॥

प्र.]नेति।एतदेव हि दीर्घग्रहणस्य प्रयोजनं स्थानिवत्त्वप्रतिषेधो यथा स्यात् । यदि तु प्रकृतो ह्रस्वो विकल्प्येत तदा णौ णिलोपस्य स्थानिवत्त्वाद्विकल्पो ह्रस्वस्य न स्यात् । यङकारलोपस्य स्थानिवद्भावान्नित्यं ह्रस्वः श्रूयेत । 'हेड वेष्टन' इत्यस्य च ह्रस्वाभावपक्षेऽहेडीति स्यात् । दीर्घे तु ह्रस्वस्य कृतेऽहीडीति सिध्यति । अन्तरङ्गलक्षणत्वादिति । णियङोर्लोपो णिमात्रापेक्षत्वादत्राऽन्तरङ्गः । दीर्घस्तु चिण्णमुल्परण्यपेक्षत्वाद्बहिरङ्ग इति सामानाश्रयत्वाऽभावादसिद्धत्वाऽभाव इत्यर्थः ।

छादेः। अद्विप्रभृत्युपसर्गस्येति वक्तव्यमिति। इह सङ्ख्यान्तरोपजने आश्रयाऽविनाशेऽपि पूर्वसङ्ख्याविनाशात्तद्वाचिशब्दाऽप्रवृत्तिरितिभावः । यत्र त्रिप्रभृतय इति । वस्तुसद्भावमाश्रित्य परिहारः। 'अद्व्युपसर्गस्ये'ति च प्रसज्यप्रतिषेधो वाक्यभेदेनाऽऽश्रीयते । पर्युदासाश्रयणे ह्यनुपसर्गस्य ह्रस्वो न स्यात् ।न वै एष इति । सङ्ख्याशब्दानामेष स्वभावो यत्सङ्ख्यान्तरस्य गौणस्य मुख्यस्य वा विषये न प्रव-

उ.]भाष्ये च।दीर्घग्रहणस्य फलान्तरमपि दर्शयति—हेड वेष्टन इति। घटादिरयम्। केचित्तूकालसूत्रस्थस्य क्रमेणिङ्सूत्रस्थस्य प्रकृतसूत्रस्थस्य च भाष्यस्य प्रामाण्याद्धेड वेष्टन इत्यस्य घटादौ पाठोऽसांप्रदायिक इत्याहुः । [ चिण्णमुलोर्दीर्घो ] ॥

छादेः । प्रसज्यप्रतिषेधे वाक्यभेदाऽसमर्थसमासापत्तावपि लक्ष्यानुरोधात्स आश्रीयत इत्याह—पर्युदासाश्रयण इति । द्व्याद्युपसर्गसदृशस्य सोपसर्गस्यैव

१ सिद्धपदरहितं वार्तिकमित्यन्ये। २ इयं व्याख्या लुप्ता । ३ 'मित्येव' । ४ इदं क्वचिन्न । ५ 'णे णोर्लोपो' । ६ 'त्वमिति' । ७ वक्तव्यमित्यन्तं वार्तिकमिति केचित् । तद्व्याख्यापि तथैव लभ्यते । ८ 'नवै लोके एष' ।

## घसिभसोर्हलि ॥ ६।४।१०० ॥

॥*॥ हल्ग्रहणमनर्थकमन्यत्रापि दर्शनात् ॥*॥ हल्ग्रहणमनर्थकम् ॥ किं कारणम् ? ॥ 'अन्यत्रापि दर्शनात्' ॥ अन्यत्रापि हि[3] लोपो दृश्यते । अग्निस्तृणानि बप्सति । शरावे बप्सति चरुः । [ घसिभसोर्हलि ] ॥

## हुझल्भ्यो हेर्धिः ॥ ६।४।१०१ ॥

॥*॥ इटः प्रतिषेधः ॥*॥ इटः प्रतिषेधो वक्तव्यः । रुदिहि स्वपिहि । झलि इति धित्वं प्राप्नोति ॥*॥ हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः ॥*॥ हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥ धित्वं कस्मान्न भवति ? ॥ 'हलधिकारात्' । प्रकृतं हल्ग्रहणमनुवर्तते ॥ क्व प्रकृतम् ? ॥

प्र.]र्त्तते । तथा चोक्तम्—'एकाजनेकाज्ग्रहणेषु चाऽऽवृत्तिसङ्ख्यानात्सिद्ध'मिति । 'नैधेय' इति च पूर्वविधिग्रहणस्य प्रत्युदाहरणमुपन्यस्तं, स्थानिवद्भावे त्र्यच्त्वाद्व्यच्त्वाऽभावादात्तदाश्रयो ढुक्न स्यादिति । [ छादेर्घे ] ॥

घसि । अचीत्यधिकाराद्धलि न प्राप्नोतीति हल्ग्रहणं क्रियते । तदुपादाने चाऽचि न प्राप्नोतीति चकारोऽच्संबन्धार्थः क्रियते। तत्राऽज्ग्रहणस्येहानधिकारादेव सर्वत्र लोपः सिध्यतीति 'हलि चे'ति न वक्तव्यम् । अन्यत्रापीति वचनाद्वार्तिककारश्चकारं न पपाठेति लक्ष्यते । बप्सतीति । एकवचने प्राप्ते व्यत्ययेन झिः । श्लौ द्विर्वचनम् । अदभ्यस्तादित्यदादेशः । उपधालोपः। खरि चेति चर्त्वम् । अत्र चान्तरङ्गत्वादुपधालोपात्पूर्वं द्विर्वचनं क्रियते । यदि तु झावेव पूर्वं लोपः स्यात्ततो द्विवचनं न स्यात् । [ घसिभसोर्हलि ] ॥

हुझ । रुदिहीति। शब्दान्तरप्राप्त्या द्वयोरप्यनित्यत्वात्परत्वादिटि पुनः प्रसङ्ग-

उ.]ग्रहणापत्तेरिति भावः । मुख्यस्योत्तरसङ्ख्यान्तरस्य विषये पूर्वसङ्ख्याया अप्रवृत्तौ भाष्ये दृष्टान्त उक्तः । गौणविषये दर्शयति–तथा चोक्तमिति । अइउण्सूत्रे । तत्र ह्यकारादीनामेकत्वपक्षे घटेन तरति घटिक इत्यत्र द्व्यज्लक्षणठनोऽप्राप्तिमाशङ्क्याऽयं परिहार उक्तः । स्थानिवद्भावे इति । निपूर्वाद्धाञः किप्रत्यय आतो लोपे तस्य स्थानिवत्त्वेनाऽच्त्वं स्यादिति भावः।तदाश्रय इति।द्व्यच्त्वाश्रय इत्यर्थः॥

घसि भ । हल्ग्रहणप्रत्याख्यातृवार्त्तिकाशयमाह–तत्रेति। अनधिकारादेवेति। व्याख्यानादेवाधिकारनिवृत्तिः सिद्धेति भावः।अन्यत्रापीति वचनादिति । सूत्रोक्तविषयादन्यत्रापीति तदर्थः । स च चकाराऽकरण एवोपपद्यत इत्यर्थः । एकवचन इति । अग्नेरेकस्य कर्तृत्वादिति भावः । अन्तरङ्गत्वादिति । यद्यप्युपधा-

१ 'हलिच' । २ 'ग्रहणानर्थक्यमन्य' । ३ क्वचिन्न । ४ 'अग्निर्वनानि'। बप्सति–दीपयति।५'सशरावं'।'सशरावं बप्सतीति' 'शरावे बप्सतीति' ६'हलीति'।७'च्वक'।

'घसिभसोर्हलि चे'ति ॥ तद्वै सप्तमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः॥ तद्वै तत्र प्रत्याख्यायते,[तत्र]प्रत्याख्यातं सप्तम्या विभक्त्या निर्दिश्यमानमर्थवद्भवति तथा निर्दिष्टमिहानुवर्तिष्यते॥अथवा 'हुझल्भ्य' इत्येषा पञ्चमी 'हली'ति सप्तम्याः षष्ठीं प्रकल्पयिष्यति-'तस्मादित्युत्तरस्ये'ति॥ 'अथवा निर्दिश्यमानस्यादेशा भवन्ती'त्येवं न भविष्यति॥यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति?॥ 'इटा व्यवहितत्वात्' ॥ यद्येवं छिन्द्धकि भिन्द्धकीत्यत्र धित्वं न प्राप्नोति ॥

प्र.]विज्ञानाद्वित्वप्रसङ्गः । अथवेति । यद्यपि सप्तम्यचरितार्था तथाऽपि 'हुझल्भ्य' इत्यनया पञ्चम्याऽचरितार्थया हेरित्येतदनुगुणा षष्ठी प्रकल्प्यते । ननु षष्ठीप्रक्लृप्तौ तदादिविधेरभावः । 'यस्मिन्विधिस्तदादावल्ग्रहण' इति ह्युच्यते । नैष दोषः । हल्ग्रहणानुवृत्तिसामर्थ्याद्धलन्तत्वाऽसंभवाच्च तदादिविधिर्विज्ञास्यते । अथवेति । यत्षष्ठ्या निर्दिश्यते तस्यैवाऽऽदेशः । सागमकस्त्वागमानामव्यभिचाराच्छब्दान्तरे श्रूयमाणे प्रतीयते न तूच्चार्यत इति तस्याऽऽदेशाऽभावः । यस्तर्हीति । आगमं विहाय हिशब्दस्याऽऽदेशो भवत्वित्यर्थः । इटेति । 'तस्मादित्युत्तरस्ये'ति वचनादनन्तरस्यैव षष्ठ्या, कार्येण च भाव्यम् । तत्र यो निर्दिष्टो नासावनन्तरो, यश्चान-

उ.]लोपः परो नित्यश्च तथाऽपि ह्रस्वमात्रापेक्षत्वाद्वित्वमन्तरङ्गम्।कित्प्रत्ययापेक्षत्वाद्बहिरङ्गो लोप इत्यर्थः । द्विर्वचनं न स्यादिति । अनच्कत्वात् । लोपस्य द्वित्वनिमित्ताऽज्निमित्तत्वाऽभावेन स्थानिवत्त्वाऽभावाच्च । द्वित्वे कृते परत्वान्नित्यत्वाच्चाऽऽदेश उपधालोपानापत्तिरिति भावः ॥ [ घसिभसोर्हलि च ] ॥

हुझल्भ्यो हेर्धिः । भाष्ये-तद्वै तत्र प्रत्याख्यायत इति।पूर्ववाक्ये हलीत्यस्यानुपयोगेन सप्तम्यर्थे सप्तम्यां प्रमाणाऽभावेन षष्ठ्यर्थ इयं सप्तमीति भावः । अथवेति पक्षेऽप्ययमेवार्थः प्रकारान्तरेणोच्यत इत्याह-यद्यपीति। ननु द्वयोरप्यचरितार्थयोः पञ्चम्येव कल्पिका कुत इत्यत आह-हेरित्येतदनुगुणेति । हेरित्यस्य विशेषणाकाङ्क्षायां तेनैव हल्ग्रहणस्य संबन्धो युक्त इत्यर्थः । द्वयोरचरितार्थयोः परत्वात्तस्मादित्युत्तरस्येत्यस्यैव प्रवृत्तिरिति वक्तुं युक्तम् । हल्ग्रहणेति । हल्ग्रहणाऽनुवृत्तेः फलान्तराऽभावाद्धेरित्यनेन सम्बन्धे तदन्तविध्यसंभवात्तदादिविधिसिद्धिरित्यर्थः । वस्तुतः स्वरूपसत्सप्तम्येव तन्निमित्तम्। अत एव 'तस्माद्नुडची'त्यादौ तदादिविधिः। षष्ठीं प्रकल्पयिष्यतीत्यस्य,-षष्ठ्यर्थे सप्तमीं कल्पयिष्यतीत्यर्थ इत्याहुः।ननु सागमोऽपि निर्दिश्यत एवेटस्तदवयवत्वादत आह-सागमकस्त्विति । शब्दान्तरे श्रूयमाणे सति 'यदागमा' इति परिभाषया प्रतीयत इत्यर्थः। अनन्तरस्यैव षष्ठ्येति। पञ्चमीनिर्देशे-

१ क्वचिन्न । २ मर्थवत्तया नि' । ३ 'वर्तते' । ४ 'भिन्धकि छिन्धकि' । ५ 'रसंभवः' । ६ 'गसकोऽपि' ।

एवं तर्हि धित्वे कृतेऽकज्भविष्यति। इदमिह संप्रधार्यं—धित्वं क्रियतामकजिति, किमत्र कर्तव्यम् ?॥परत्वाद्धित्वम्॥ नित्योऽकच् । कृतेऽपि धित्वे प्राप्नोत्यकृतेऽपि ॥ अकजप्यनित्यः । अन्यस्य कृते धित्वे प्राप्नोत्यन्यस्याऽकृते । शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । उभयोरनित्ययोः परत्वाद्धित्वं, धित्वे कृतेऽकज्भविष्यति ॥ अथवा हकारस्यैवाऽशक्तिजेनेकारेण ग्रहणमिति ॥

## चिणो लुक् ॥ ६।४।१०४ ॥

॥*॥ चिणो लुक्ति तग्रहणम् ॥*॥ चिणो लुकि तग्रहणं कर्तव्यम् ॥

प्र.]न्तरः सागमको नासौ निर्दिष्ट इति धित्वाऽभावः। यद्येवमिति । यदि निर्दिश्यमानस्याऽऽदेशस्तदाऽकचि कृते शब्दान्तरत्वाद्धित्वाऽभावः । धित्वे कृतेऽकजिति । पुनः प्रसङ्गविज्ञानाश्रयणात् । न ह्यन्यथाऽज्ञाताद्यर्थाऽवगतिर्भवति । अथवाऽज्ञाताद्यर्थापेक्षत्वाद्बहिरङ्गोऽकजिति पूर्वं धित्वं पश्चादकच् । अथवेति । इकारेणाऽऽगन्तुना हेरिति निर्देशः। हकारमात्रं तु स्थानित्वेन निर्दिश्यते । एवं धिरिति धकारमात्रमादेशः। इकारस्तूच्चारणार्थः । व्यञ्जनस्य स्वररहितस्योच्चारयितुमशक्यत्वात् । ततश्च 'रुदिही'त्यत्र हकारस्येटा व्यवधानाद्धकाराऽभावः । स हि समुदायभक्तत्वात्तमेव न व्यवदध्यात् । अवयवं तु व्यवदधात्येव । तथा 'भिन्धकी'त्यत्र सत्यपि पूर्वमकचि हकारस्य धकारे कृते रूपं सिध्यति । [ हुझल्भ्यो हेर्धिः ] ॥

चिणो । तग्रहणमिति । इदमस्मिन्नसिद्धमिति भेदनिबन्धनत्वाद्विषयविषयिभावस्य चिणो लुगित्यस्य लक्षणस्य भेदाऽभावादकारितरामित्यत्र लोपस्याऽसिद्धत्वाऽभावात्तरपोऽपि लुक्प्राप्नोति । एवं च सति प्रत्ययत्रयात्मकस्यैव समुदायस्य लुक्प्रसङ्गः । इतरस्तु युगपत्प्रत्ययत्रयस्य लुक्प्रसङ्गोऽनेनोक्त इति मत्वाऽऽह—

उ.]ऽनन्तरस्यैव षष्ठी प्रकल्प्येति सूत्रार्थ इति भावः। पञ्चमीनिर्देशेऽनन्तरस्य कार्यं भवतीति सूत्रार्थमाश्रित्याऽऽह—कार्येण चेति । षष्ठ्या कार्येण भाव्यमिति पाठे षष्ठीबोधितकार्येणेत्यर्थः। पुनः प्रसङ्गविज्ञानाश्रयणे हेतुमाह—न हीति । अथवेति । इदं चिन्त्यम्।अर्थापेक्षबहिरङ्गत्वस्यात्र शास्त्रेऽनाश्रयणादित्यसकृदावेदितम् । हकारमात्रस्य स्थाने धीति विशिष्टादेशे रूपं न सिध्येदत आह—एवं धिरिति। अशक्तिजेनेत्येतद्व्याचष्टे—व्यञ्जनस्येति । यद्यपि विभक्त्यकारेण स्थानिन उच्चारयितुं शक्यत्वं तथाऽप्यादेशसाधारण्येनेदमेवोक्तम् । यद्वा तत्प्रक्रियावाक्याभिप्रायमिदम् ।

चिणो लुक् । समुदायस्य लुक्प्रसङ्ग इति।लक्ष्यभेदाद्वारं वारं प्रवृत्त्येति भावः। अभेदपक्षम् । निमित्तभूतानुपूर्व्यैक्येन लक्षणाऽभेदपक्षमिति भावः। अग्न्याधाना-

१ क्वचिन्न । २ 'भवतीति' ।



३ स्यैवेतदशक्तिजेने । ४ क्वचिन्न ।

किं प्रयोजनम् ?॥ सङ्घातस्य मा भूत् अकारितराम् अहारितरामिति ॥*॥ चिणो लुकि तग्रहणानर्थक्यं सङ्घातस्याऽप्रत्ययत्वात् ॥*॥ चिणो लुकि तग्रहणमनर्थकम् ॥ सङ्घातस्य लुक्कस्मान्न भवति ? ॥ 'सङ्घातस्याप्रत्ययत्वात्'। प्रत्ययस्य लुक्श्लुलुपो भवन्तीत्युच्यते न च सङ्घातः प्रत्ययः ॥ तलोपे तर्हि कृते परस्य प्राप्नोति ॥*॥ तलोपस्य चासिद्धत्वात् ॥*॥ असिद्धस्तलोपस्तस्याऽसिद्धत्वान्न भविष्यति ॥*॥ कार्यकृतत्वाद्वा ॥*॥ अथवा कृतश्चिणो लुगिति कृत्वा पुनर्न भविष्यति[लुक्]। तद्यथा—वसन्ते ब्राह्मणोऽग्नीनादधीतेति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनःप्रवृत्तिर्न भवति ॥ विषम उपन्यासः। युक्तं यत्तस्यैव पुनः प्रवृत्तिर्न स्याद्यत्तु तदाश्रयं प्राप्नोति न तच्छक्यं बाधितुम्। तद्यथा 'वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेते'त्यग्न्याधाननिमित्तं वसन्ते वसन्त इज्यते । तस्मात्पूर्वोक्तावेव परिहारौ [इति]॥अथवा क्ङितीति वर्त्तते ॥ क्व प्रकृतम् ?॥'गमहनजनखनघसां लोपः क्ङित्यनङी'ति ॥ तद्वै सप्तमीनिर्दिष्टं, षष्ठीनिर्दिष्टेन चेहार्थः ॥ 'चिण' इत्येषा पञ्चमी 'क्ङि'तीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति—तस्मादित्युत्तरस्येति ॥ [चिणो लुक् ] ॥

---

प्र.]चिणो लुकीति। इतरः स्वाभिप्रायं प्रकाशयति—तलोप इति।तलोपस्यासिद्धत्वादिति । प्रतिलक्ष्यं लक्षणभेदादस्ति विषयविषयिभावः। अभेदपक्षमाश्रित्याऽऽहकार्यकृतत्वाद्वेति । एकस्मिन्विषये सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्पुनः—प्रवृत्त्यभावः । तद्यथेति । यथैकस्मिन्वसन्तेऽग्न्याधानं कृत्वा वसन्तान्तरे ब्राह्मणोऽग्न्याधानं न कुरुते, शास्त्रार्थस्याऽनुष्ठितत्वात् । तथैकस्य प्रत्ययस्य लुकि कृते प्रत्ययान्तरस्य तरवादेर्लुङ्ग प्रवर्तते। युक्तं यत्तस्यैवेति। इहाभिन्नरूपमपि फलभेदाद्भिन्नमुच्यते । अग्न्याधानं तु कर्मान्तरेषु कर्तुर्योग्यतोत्पादनार्थमिति फलभेदाऽभावात्पुनर्न क्रियते । काम्यानां तु कर्मणां फलभेदात्पुनरनुष्ठानं भवति । तथेहापि तस्य लुकि कृते तरवादेर्लुक्प्रसङ्गः। अग्न्याधानं निमित्तमस्येति बहुव्रीहिः। क्रियाविशेषणं चैतत् । अनाहिताग्नेरनधिकारादग्न्याधानं निमित्तं यागस्योच्यते ।

---

उ.] ग्निष्टोमयोर्वैधर्म्ये हेतुं न विद्म इति शङ्कां परिहरति—इहाभिन्नरूपमिति । ज्योतिष्टोमादीत्यर्थः।कर्मान्तरेषु—अग्निहोत्रादिषु । कर्त्तुरित्युपलक्षणम् । अग्नेश्चेत्यपि बोध्यम् । इहापि रूपान्तरप्राप्त्या फलभेद इत्याह—तथेति । अत्र यद्वक्तव्यं तत्

---

१ 'सङ्घातस्य लुङ्माभूत्'। 'इह माभूत्'।२ ''मनर्थकम्। किं कारणं 'सङ्घातस्याऽप्रत्ययत्वात्' । सङ्घातस्य लुक्कस्मान्न भवति । अप्रत्ययत्वात्'' । ३ 'कृते तर्हि' । ४ क्वचिन्न । ५ 'यजेतेति—इत्यन्या' । ६ क्वचिन्न ।

## उतश्च प्रत्ययादसंयोगपूर्वात् ॥६।४।१०६॥

कथमिदं विज्ञायते,–उकारात्प्रत्ययादिति, आहोस्विदुकारान्तात्प्रत्ययादिति ? ॥ किंचातः ? ॥ यदि विज्ञायते–उकारात्प्रत्ययादिति,–सिद्धं तनु कुरु, चिनु सुन्विति न सिध्यति ॥ अथ विज्ञायते–उकारान्तात्प्रत्ययादिति–सिद्धं चिनु सुनु, तनु कुर्विति न सिध्यति ॥ तथाऽसंयोगपूर्वग्रहणेनैव पर्युदासः स्यात्–अक्ष्णुहि तक्ष्णुहि, आप्नुहि[३] शक्नुहीत्यत्र न स्यात् ॥ यथेच्छसि तथाऽस्तु । अस्तु तावदुकारात्प्रत्ययादिति ॥ कथं चिनु सुन्विति ?॥ तदन्तविधिना भविष्यति ॥ अथवा पुनरस्तूकारान्तात्प्रत्ययादिति ॥ कथं तनु कुर्विति ? ॥ व्यपदेशिवद्भावेन भविष्यति ॥

यदप्युच्यते,–'तथाऽसंयोगपूर्वग्रहणेनैव पर्युदासः स्यात् अक्ष्णुहि तक्ष्णुहि,

प्र.]उतश्च। कथमिदमिति। उतश्च प्रत्ययादित्यनयोर्विशेषणविशेष्यभावे कामचारायदोकारः प्रत्ययेन विशेष्यते तदा तदन्तविधेरभावादुकारात्प्रत्ययादिति पक्षोऽवतिष्ठते। उकारस्य विशेष्यत्वात्तेन नास्ति तदन्तता। न संभवति चोकारः प्रत्ययान्तः। यदा पुनर्विशेष्यत उकारेण प्रत्ययोऽतस्तदन्तताऽऽश्रीयते प्रत्ययस्य तस्मात्पक्षद्वयोद्भवः। पक्षद्वयेऽपि दोषदर्शनात्प्रश्नः। तथेति। तदन्तपक्षेऽयं दोषः। आद्ये तु पक्ष उकारस्याऽप्रत्ययत्वाल्लुक्प्रसङ्ग एवात्र नास्तीति दोषाऽभावः। ननूकारात्प्रत्ययादिति विज्ञायमान उकारस्य प्रत्ययस्य संयोगपूर्वत्वाऽसंभवादसंयोगपूर्वग्रहणं किमर्थं स्यात् ?। उच्यते। अङ्गविशेषणं स्यात्। तथा च 'क्षिणु' इत्यत्र न स्यादित्यमपि दोषो वक्तव्यः। तदन्तविधिनेति। ननूकारस्य विशेष्यत्वात्कथं तदन्तविधिः?। विशेषणत्वात्तु तदन्तविधौ वक्ष्यमाणात्पक्षादस्य भेदो न प्राप्नोति। एवं तर्हि तन्त्रेण सूत्रद्वयमभ्युपगम्यैतदुच्यते। तत्रैकस्मिन्सूत्रे प्रत्ययेनोकारो विशेष्यते, द्वितीये तूकारेण प्रत्यय इति दोषाऽभावः।

उ.]संप्रसारणाच्चेति सूत्र उक्तम्। भाष्ये–पूर्वोक्तावेवेति। तद्ग्रहणमसिद्धत्वं वा॥ उतश्च प्र। प्रत्ययस्य विशेषणत्वेऽप्यसंभवात्तेन तदन्तविधिर्नेत्याह–न संभवति चेति। द्वितीयं पक्षं दर्शयति–यदा पुनरिति। अङ्गविशेषणं स्यादिति। असंयोगपूर्वादङ्गादुत्तरो य उकाररूपः प्रत्ययस्तस्मादित्यर्थः। [ अङ्गविशेषणत्वेऽप्यसंभवात्तेन नै[६]तत् ]। क्षिण्विति।क्षेण्वित्युचितः पाठः।'संज्ञापूर्वको विधिरनित्य' इत्यस्य भाष्येऽदर्शनात्। अयमपि दोष इति। आद्ये पक्षे भाष्यानुक्तोऽप्ययं दोषो द्रष्टव्य इत्यर्थः। न प्राप्नोतीति। कर्मकर्तरि प्रयोगः। तत्रैकस्मिन्सूत्र इति। असंयोग-

१ 'सुनु चिन्विति'। २ 'तक्ष्णुहि अक्ष्णुहि'। 'तक्ष्णुहि'। ३ 'प्राप्नुहि'। ४ इतिः क्वचिन्न ।५ स्तीत्यत्र दो । ६ क्वचिन्न ।

आमुहि शक्नुहीत्यत्र न स्या'दिति,—नास्माभिरसंयोगपूर्वग्रहणेनोकारान्तं विशेष्यते ॥ किं तर्हि ? ॥ उकारो विशेष्यते,—'उकारो योऽसंयोगपूर्वस्त-दन्तात्प्रत्यया'दिति । ॥*॥ उतश्च प्रत्ययाच्छन्दोवावचनम्॥*॥ उतश्च प्रत्यया-दित्यत्र च्छन्दसि वेति वक्तव्यम् । अव स्थिरा तनुहि यातुजूनाम् । धिनुहि यज्ञं धिनुहि यज्ञपतिम् । तेन मा भागिनं कृणुहि । ॥*॥उत्तरार्थं च ॥*॥ [उत्तरार्थं च ] ॥ केचित्तावदाहुश्छन्दोग्रहणं कर्तव्यमिति । अपर आहुर्वावचनं कर्तव्यमिति । 'लोपश्चास्यान्यतरस्यां म्वो'रित्यत्रान्यतरस्याङ्ग्रहणं न कर्तव्यं भवति ॥ [ उतश्च प्रत्ययात् ] ॥

अत उत्सार्वधातुके ॥६।४।११०॥

सार्वधातुक इति किमर्थम् ? ॥ इह मा भूत्—संचस्करतुः संचस्करुः ॥ ॥*॥ स्यान्तस्य प्रतिषेधः ॥*॥ स्यान्तस्य प्रतिषेधो वक्तव्यः । करिष्यति करिष्यते ॥ ॥*॥ कृञ उत्त्व उकारान्तनिर्देशात्स्यान्तस्याऽप्रतिषेधः ॥*॥ कृञ

---

प्र.]व्यपदेशिवद्भावेनेति ।'आद्यन्तवदेकस्मि'न्नित्यनेनेत्यर्थः। किं तर्ह्युकारो विशे-ष्यत इति । ननूकारस्य संज्ञात्वात्संज्ञिपरतन्त्रत्वादप्रधानस्य कथं विशेषणेन संबन्धः ? । नैष दोषः । यावदस्य विशेषणत्वं न विवृतं तावत्संज्ञात्वं नास्तीत्य-प्राधान्याऽभावः । तत्राऽसंयोगपूर्व उकारः प्रत्ययस्य विशेषणमिति विशेषणेन संबन्धमनुभूय संज्ञात्वमुकारो लभते । छन्दोग्रहणमिति । नित्यं करोते'रित्यस्य वाक्यभेदेन 'छन्दसि वे'ति संबध्यते । [ उतश्च प्रत्ययादसंयोग ] ॥

अत उत्।सार्वधातुक इति किमर्थमिति। सत्यपि सार्वधातुकग्रहणे स्यान्त-निवृत्त्यर्थोऽवश्यं कर्तव्यो यत्न इति तेनैव यत्नेनाऽऽर्द्धधातुके न भविष्यतीति भावः। स्यान्तस्येति । इह सार्वधातुके विकरणे कृते तेन व्यवधानात्सार्वधातुके परतः

---

उ.]पूर्वग्रहणं तु योग्यत्वाद्द्वितीयवाक्य एव संबध्यत इत्यर्थः । आद्यन्तवदेकेति । एवं व्याख्याने बीजं चिन्त्यम् । संज्ञिपरतन्त्रत्वादिति । संज्ञिनि तदन्ते विशेषण-त्वादित्यर्थस्तदाह—अप्रधानस्येति । यावदस्येति । अस्यार्थतत्त्वं 'येन विधि'-रित्यत्र निरूपम् । असंयोगपूर्व उकार इति । असंयोगपूर्वत्वविशिष्ट इत्यर्थः । 'उत्तरार्थं छन्दोग्रहण'मित्यत्र यदुत्तरं तद्व्याचष्टे—नित्यं करोतेरिति । तत्र च्छन्दो-ग्रहणमेव कार्यम् । तच्च वाक्यभेदेन च्छन्दसि विकल्पविधानार्थं नित्यस्य पूर्वेणैव सिद्धत्वादिति भावः । [ उतश्च प्रत्ययात् ] ॥

अत उत्सा। कर्तव्यो यत्न इति।'उत'इत्यनुवृत्तिरूपः। विकरणे कृत इति । अन्तरङ्गत्वादिति भावः। असंभवादिति । करोतेरिति धातुनिर्देश इत्यर्थः। भाष्ये—

---

१ क्वचिन्न । २ 'छन्दसिवावचनं'। ३ लुप्तमिदं । ४ क्वचिल्लुप्तम् । ५'करिष्यतः' ।

उत्त उकारान्तनिर्देशात्स्यान्तस्याऽप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः॥ उत्वं कस्मान्न भवति ? ॥ 'उकारान्तनिर्देशात्' ॥ अशक्यः करोतावुकारान्तनिर्देशस्तत्राऽऽश्रयितुम् । इह संपरिभ्यां भूषणसमवाययोः करोताविति, इहैव स्यात्– संस्करोति । संस्कर्ता संस्कर्तुमित्यत्र न स्यात् ॥ न ब्रूमोऽस्मादुकारान्तनिर्देशाद्योऽयं करोतेरिति ॥ किं तर्हि ? ॥ उकारान्तप्रकरणादुकारान्तमङ्गमभिसंबध्यते । उत इति वर्त्तते ॥ यद्येवं नार्थः सार्वधातुकग्रहणेन॥कस्मान्न भवति–संचस्करतुः संचस्करुरिति ? ॥ उत इति वर्त्तते ॥ [॥*॥ उत्तरार्थन्तु सार्वधातुकग्रहणम् ॥*॥] उत्तरार्थं तर्हि सार्वधातुकग्रहणं कर्तव्यम् । श्नसोरल्लोप इति ॥ श्नम्सार्वधातुक एव ॥ अस्तेरप्यार्द्धधातुके भूभावेन भवितव्यम् ॥ ॥*॥ उत्तरार्थन्तु ॥*॥ उत्तरार्थमेव तर्हि । श्नाभ्यस्तयोरात इति ॥ श्ना सार्वधातुक एव । अभ्यस्तमप्याकारान्तमार्द्धधातुके नास्ति ॥ ननु चेदमस्ति–अप्सु यायावरः प्रवपेत पिण्डानिति॥नैतदाकारान्तम्॥

प्र.]करोतेरित्यंस्यार्थस्याऽसंभवात्सार्वधातुके परतो यदङ्गं तदवयवस्य करोतेरित्याश्रयणीयम् । एवं च स्यान्तस्यापि प्राप्नोति । स्यग्रहणमुपलक्षणं, तास्यन्तस्यापि प्रसङ्गात् । कृञ उत्व इति । 'उत' इत्यनुवर्तनादिति भावः । इतरस्तु करोतेरित्युकारनिर्देशाश्रयेणानेनोक्तमिति मत्वाऽऽह–अशक्य इति। उत इति वर्तत इति। तेनोकारान्तस्याङ्गस्यावयवस्य करोतेरत उत्सार्वधातुके क्ङिति भवतीति सूत्रार्थः संपद्यते । अभ्यस्तमपीति । यत्र नेष्यते लोप इति भावः । यत्र त्वस्ति तत्र भवत्येव लोपः,–ययतुः ययुरिति । यायावर इति । ननु चातो लोपस्य स्थानिवद्भावात्प्राप्त आकारलोपे वरेऽजादेशस्य स्थानिवत्त्वं निषिध्यते । यदि चात्र 'श्नाभ्यस्तयोरात' इत्याल्लोपः स्यात्स्थानिवत्प्रतिषेधोऽनर्थकः स्यात् । 'ई हल्यघो'रितीत्वमत्र प्राप्नोतीति चेत्,वक्ष्यत्येव तत्प्राप्तिमिति वक्ष्यमाणाद्भेदाऽभावः।एवं तर्हि भाष्यकार

उ.]तत्राऽऽश्रयितुमिति। करोतिनिर्देशे इत्यर्थः । नन्वभ्यस्तमाकारान्तं विद्यत एव ययतुरित्यादावत आह–यत्र नेष्यत इति । यत्र दोषः स्यादित्यर्थः । तत्र भवत्येवेति । 'आतो लोप इटि चे'त्यनेनेति भावः। ननु चाऽऽतो लोपस्येति । यातेर्यङन्तात्'यश्च यङ'इति वरचि परनिमित्ताऽल्लोपस्य स्थानिवत्त्वादातो लोप इत्याल्लोपे प्राप्ते वरेऽजादेशस्य स्थानिवत्त्वं निषिध्यत इत्यर्थः। एवं तर्हि एवमिति । 'सत्यामप्याल्लोपाऽप्राप्ता'विति शेषः । अभ्युपेत्येति । यद्यपि स्थानिवत्त्वनिषेधसामर्थ्या-

१ 'र्देशः सूत्र आश्र'। 'र्देशस्तन्त्रमा'। २ 'करोतिरिति' ।३ 'उकारप्रकर' । ४ इदं वार्त्तिकमित्यन्ये । ५ इदं लुप्तं स्यात् । ६ 'श्नः सार्व । ७ प्रायिकमेतत् । ८ 'बीजमिति' । ९ 'त्यस्यासम्भवा' । १०. 'येणोक्त' ।

किं तर्हि ?॥यकारान्तमेतत् ॥ उत्तरार्थमेव तर्हि । ई हल्यघोरिति ॥ तत्रापि श्नाभ्यस्तयोरित्येव ॥ अतोऽप्युत्तरार्थमेव तर्हि । इद्दरिद्रस्येति ॥ वक्ष्यत्येतद्दरिद्रातेरार्द्धधातुके लोपः सिद्धश्च प्रत्ययविधाविति ॥ अतोऽप्युत्तरार्थम् । 'भियोऽन्यतरस्याम्'॥अभ्यस्तस्येत्येव ॥ अतोऽप्युत्तरार्थमेव तर्हि। जहातेश्च ॥ अभ्यस्तस्येत्येव ॥ अतोऽप्युत्तरार्थम् । आ च हौ ॥ हावित्युच्यते । अभ्यस्तस्येत्येव ॥ अतोऽप्युत्तरार्थमेव । लोपो यि ॥ अभ्यस्तस्येत्येव ॥ अतोऽप्युत्तरार्थमेव तर्हि । घ्वसोरेद्धावभ्यासलोपश्चेति ॥ हावित्युच्यते ॥ तदेव तर्हि प्रयोजनं श्नसोरल्लोप इति ॥ ननु चोक्तं 'श्नम्सार्वधातुक एवास्तेरप्यार्द्धधातुके भूभावेन भवितव्य'मिति ॥ ॥*॥ अनुप्रयोगे तु भुवाऽस्त्यबाधनं स्मरन्ति कर्तुर्वचनं मनीषिणः॥*॥अनुप्रयोगे तु भुवाऽस्तेरबाधनमिष्यते। ईहामास ईहामासतुः ईहामासुरिति ॥ किंच स्याद्यद्यत्र लोपः स्यात् ? ॥*॥ लोपे द्विर्वचनाऽसिद्धिः ॥*॥ लोपे कृतेऽनच्कत्वाद्द्विर्वचनं न स्यात्॥स्थानिवद्भावाद्द्वि-

प्र.]आल्लोपप्राप्तिमभ्युपेत्यपरिहारान्तरमाह—नैतदाकारान्तमिति । या य इति स्थिते सन्यङन्तस्य प्रथमस्यैकाचो द्विर्वचनमिति याय् इत्यस्य द्विर्वचनं, ततो यायाय् इत्यभ्यस्तमाकारान्तं न भवति । ननु च यायाय्शब्दस्याभ्यस्तसंज्ञायां यलोपे कृते भवत्येवावशिष्टस्याऽभ्यस्तसंज्ञा । एवं तर्ह्युपदेशग्रहणानुवृत्त्योपदेशे यदाकारान्तमभ्यस्तं तस्याऽऽल्लोपो ननु कृते यलोप इति मत्वा परिहार उक्तः । अभ्यस्तस्येत्येवेति । ननु च विभीवानित्यत्राऽपि प्राप्नोति । एवं तर्हि छान्दसः क्वसुरिति भाष्यकारस्य दर्शनं, छन्दसि च दृष्टमनुविधीयते ॥

उ.]दाल्लोपाऽप्राप्तिरेव तथाऽपि तत्प्राप्तिमभ्युपगम्य न्यायव्युत्पादनाय परिहारान्तरमुच्यत इत्यर्थः । वस्तुतस्त्वीहल्यघोरित्येतत्प्राप्तिसाधारणं समाधानम् । अत एव सांप्रतपुस्तकेषु 'ईहल्यघो'रित्युत्तरं 'तत्रापि श्नाभ्यस्तयोरित्येव' इत्येवोपलभ्यते नतु 'ननु चेदमस्ति,अप्सु यायावर'इत्यादिग्रन्थ इत्याहुः।यलोप इति।'लोपो व्यो'रित्यनेन। उपदेशग्रहणानुवृत्त्येति । 'स्यसिच्सीयुट्तासी'त्यतः। वस्तुतोऽल्लोपस्याऽसिद्धत्वेनापि यायावरः परिहर्तुं शक्यः । अत्रेदं चिन्त्यम् । जहाति ददातीत्यादावीत्त्वाल्लोपयोर्वारणाय क्ङितीत्येतत्संबन्धावश्यकत्वेनैकदेशयुक्तिरियं 'ननु चेदमस्ती'त्यादिः । ननु च बिभीवानिति।भियोऽन्यतरस्यामित्यत्राऽसति सार्वधातुकग्रहणे क्वसावन्त्यस्येत्त्वविकल्पः स्यादित्यर्थः । छान्दस इति । विभीवानित्यत्रेत्यर्थः । दृष्टमिति । ततश्चायमत्र विधिर्न भवतीत्यर्थः । भाष्ये—अतोऽप्युत्तरार्थम् । आ च हौ हावि-

१ क्वचिन्न । २ 'अत्रापि । ३ 'ततो'। ४ इतिः क्वचिन्न । ५ 'श्नः' । ६ श्लोकवार्तिकम् ७ 'वचनान्मनी' । ८ 'भूभावेनास्ते' ।

उत्त्व उकारान्तनिर्देशात्स्यान्तस्याऽप्रतिपेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः॥ उत्त्वं कस्मान्न भवति ? ॥ 'उकारान्तनिर्देशात्' ॥ अशक्यः करोतावुकारान्तनिर्देशस्तत्राऽऽश्रयितुम् । इह संपरिभ्यां भूषणसमवाययोः करोताविति, इहैव स्यात्– संस्करोति । संस्कर्ता संस्कर्तुमित्यत्र न स्यात् ॥ न ब्रूमोऽस्मादुकारान्तनिर्देशाद्योऽयं करोतेरिति ॥ किं तर्हि ? ॥ उकारान्तप्रकरणादुकारान्तमङ्गमभिसंबध्यते । उत इति वर्त्तते ॥ यद्येवं नार्थः सार्वधातुकग्रहणेन॥कस्मान्न भवति–संचस्करतुः संचस्करुरिति ?॥ उत इति वर्त्तते ॥ [॥*॥ उत्तरार्थन्तु सार्वधातुकग्रहणम् ॥*॥] उत्तरार्थं तर्हि सार्वधातुकग्रहणं कर्त्तव्यम् । श्नसोरल्लोप इति ॥ श्नम्सार्वधातुक एव ॥ अस्तेरप्यार्द्धधातुके भूभावेन भवितव्यम् ॥ ॥*॥ उत्तरार्थन्तु ॥*॥ उत्तरार्थमेव तर्हि । श्नाभ्यस्तयोरात इति ॥ श्ना सार्वधातुक एव । अभ्यस्तमप्याकारान्तमार्द्धधातुके नास्ति ॥ ननु चेदमस्ति–अप्सु यायावरः प्रवपेत पिण्डानिति॥नैतदाकारान्तम्॥

प्र.]करोतेरित्यस्यार्थस्याऽसंभवात्सार्वधातुके परतो यदङ्गं तदवयवस्य करोतेरित्याश्रयणीयम् । एवं च स्यान्तस्यापि प्राप्नोति । स्यग्रहणमुपलक्षणं, तास्यन्तस्यापि प्रसङ्गात् । कृञ उत्व इति । 'उत' इत्यनुवर्तनादिति भावः । इतरस्तु करोतेरित्युकारनिर्देशाश्रयेणानेनोक्तमिति मत्वाऽऽह–अशक्य इति। उत इति वर्तत इति। तेनोकारान्तस्याङ्गस्यावयवस्य करोतेरत उत्सार्वधातुके क्ङिति भवतीति सूत्रार्थः संपद्यते । अभ्यस्तमपीति । यत्र नेष्यते लोप इति भावः । यत्र त्वस्ति तत्र भवत्येव लोपः,–ययतुः ययुरिति । यायावर इति । ननु चातो लोपस्य स्थानिवद्भावात्प्राप्त आकारलोपे वरेऽजादेशस्य स्थानिवत्त्वं निषिध्यते । यदि चात्र 'श्नाभ्यस्तयोरात' इत्याल्लोपः स्यात्स्थानिवत्प्रतिषेधोऽनर्थकः स्यात् ।'ई हल्यघो'रितीत्वमत्र प्राप्नोतीति चेत्,वक्ष्यत्येव तत्प्राप्तिमिति वक्ष्यमाणाद्भेदाऽभावः।एवं तर्हि भाष्यकार

उ.]तत्राऽऽश्रयितुमिति। करोतिनिर्देशे इत्यर्थः । नन्वभ्यस्तमाकारान्तं विद्यत एव ययतुरित्यादावत आह–यत्र नेष्यत इति । यत्र दोषः स्यादित्यर्थः । तत्र भवत्येवेति । 'आतो लोप इटि चे'त्यनेनेति भावः। ननु चाऽऽतो लोपस्येति । यातेर्यङन्तात्'यश्च यङ'इति वरचि परनिमित्ताऽल्लोपस्य स्थानिवत्त्वादातो लोप इत्यालोपे प्राप्ते वरेऽजादेशस्य स्थानिवत्त्वं निषिध्यत इत्यर्थः। एवं तर्हि एवमिति । 'सत्यामप्याल्लोपाऽप्राप्ता'विति शेषः । अभ्युपेत्येति । यद्यपि स्थानिवत्त्वनिषेधसामर्थ्या-

१ 'र्देशः सूत्र आश्र'। 'र्देशस्तन्त्रमा'। २ 'करोतिरिति' ।३ 'उकारप्रकर' । ४ इदं वार्त्तिकमित्यन्ये । ५ इदं लुप्तं स्यात् । ६ 'श्नः सार्व । ७ प्रायिकमेतत् । ८ 'बीजमिति' । ९ 'त्यस्यसम्भवा' । १० 'येणोक्त' ।

किं तर्हि ?॥यकारान्तमेतत् ॥ उत्तरार्थमेव तर्हि । ई हल्यघोरिति ॥ तत्रापि श्नाभ्यस्तयोरित्येव ॥ अतोऽप्युत्तरार्थमेव तर्हि । इद्दरिद्रस्येति ॥ वक्ष्यत्येतद्दरिद्रातेरार्द्धधातुके लोपः सिद्धश्च प्रत्ययविधाविति ॥ अतोऽप्युत्तरार्थम् । 'भियोऽन्यतरस्याम्'॥अभ्यस्तस्येत्येव ॥ अतोऽप्युत्तरार्थमेव तर्हि। जहातेश्च ॥ अभ्यस्तस्येत्येव ॥ अतोऽप्युत्तरार्थम् । आ च हौ ॥ हावित्युच्यते । अभ्यस्तस्येत्येव ॥ अतोऽप्युत्तरार्थमेव । लोपो यि ॥ अभ्यस्तस्येत्येव ॥ अतोऽप्युत्तरार्थमेव तर्हि । घ्वसोरेद्धावभ्यासलोपश्चेति ॥ हावित्युच्यते ॥ तदेव तर्हि प्रयोजनं श्नसोरल्लोप इति ॥ ननु चोक्तं 'श्नम्सार्वधातुक एवास्तेरप्यार्द्धधातुके भूभावेन भवितव्य'मिति ॥ ॥*॥ अनुप्रयोगे तु भुवाऽस्त्यबाधनं स्मरन्ति कर्तुर्वचनं मनीषिणः॥*॥अनुप्रयोगे तु भुवाऽस्तेरबाधनमिष्यते। ईहामास ईहामासतुः ईहामासुरिति ॥ किंच स्याद्यद्यत्र लोपः स्यात् ? ॥*॥ लोपे द्विर्वचनाऽसिद्धिः ॥*॥ लोपे कृतेऽनच्कत्वाद्द्विर्वचनं न स्यात्॥स्थानिवद्भावाद्भवि-

प्र.]आल्लोपप्राप्तिमभ्युपेत्यपरिहारान्तरमाह—नैतदाकारान्तमिति । या य इति स्थिते सन्यङन्तस्य प्रथमस्यैकाचो द्विर्वचनमिति याय् इत्यस्य द्विर्वचनं, ततो यायाय् इत्यभ्यस्तमाकारान्तं न भवति । ननु च यायाय्शब्दस्याभ्यस्तसंज्ञायां यलोपे कृते भवत्येवावशिष्टस्याऽभ्यस्तसंज्ञा । एवं तर्ह्युपदेशग्रहणानुवृत्त्योपदेशे यदाकारान्तमभ्यस्तं तस्याऽऽल्लोपो नतु कृते यलोप इति मत्वा परिहार उक्तः । अभ्यस्तस्येत्येवेति । ननु च बिभीवानित्यत्राऽपि प्राप्नोति । एवं तर्हि छान्दसः क्वसुरिति भाष्यकारस्य दर्शनं, छन्दसि च दृष्टमनुविधीयते ॥

उ.]दाल्लोपाऽप्राप्तिरेव तथाऽपि तत्प्राप्तिमभ्युपगम्य न्यायव्युत्पादनाय परिहारान्तरमुच्यत इत्यर्थः । वस्तुतस्त्वीहल्यघोरित्येतत्प्राप्तिसाधारणं समाधानम् । अत एव सांप्रतपुस्तकेषु 'ईहल्यघो'रित्युत्तरं 'तत्रापि श्नाभ्यस्तयोरित्येव' इत्येवोपलभ्यते नतु 'ननु चेदमस्ति,अप्सु यायावर'इत्यादिग्रन्थ इत्याहुः।यलोप इति।'लोपो व्यो'रित्यनेन। उपदेशग्रहणानुवृत्त्येति । 'स्यसिच्सीयुट्तासी'त्यतः। वस्तुतोऽल्लोपस्याऽसिद्धत्वेनापि यायावरः परिहर्तुं शक्यः । अत्रेदं चिन्त्यम् । जहाति ददातीत्यादावीत्त्वाल्लोपयोर्वारणाय क्ङितीत्येतत्संबन्धावश्यकत्वेनैकदेश्युक्तिरियं 'ननु चेदमस्ती'त्यादिः । ननु च बिभीवानिति।भियोऽन्यतरस्यामित्यत्राऽसति सार्वधातुकग्रहणे क्वसावन्त्यस्येत्त्वविकल्पः स्यादित्यर्थः । छान्दस इति । बिभीवानित्यत्रेत्यर्थः । दृष्टमिति । ततश्चायमत्र विधिर्न भवतीत्यर्थः । भाष्ये—अतोऽप्युत्तरार्थम् । आ च हौ हावि-

१ क्वचिन्न । २ 'अत्रापि । ३ 'ततो'। ४ इतिः क्वचिन्न । ५ 'श्न:' । ६ श्लोकवार्त्तिकम् ७ 'वचनान्मनी' । ८ 'भूभावेनास्ते' ।

ष्यति ॥*॥ स्थानिवदिति चेत्कृते भवेद्द्वित्वे ॥*॥ स्थानिवदिति चेत्कृते द्वित्वे लोपः प्राप्नोति ॥ अस्तु तर्हि परस्य लोपः, अभ्यासस्य योऽकारस्तस्य दीर्घत्वं भविष्यति ॥*॥ नैवं सिध्यति, कस्मात्प्रत्यङ्गत्वाद्भवेद्धि पररूपम् ॥*॥ नैवं सिध्यति॥ कस्मात्?॥ ['प्रत्यङ्गत्वाद्भवेद्धिपररूपम्'] प्रत्यङ्गत्वात्पररूपं प्राप्नोति॥ ॥*॥ तस्मिंश्च कृते लोपः ॥*॥ पररूपे च कृते लोपः प्राप्नोति ॥*॥ दीर्घत्वं बाधकं भवेत्तत्र ॥*॥ [तत्र]'अत आदेः' इति दीर्घत्वं बाधकं भविष्यति ॥ इदं तर्हि प्रयोजनं सार्वधातुके भूतपूर्वमात्रेऽपि यथा स्यात्—कुर्विति।

प्र.] कृते द्वित्वे लोपः प्राप्नोतीति। ननु च नियतकालत्वात्स्थानिवद्भावस्य कृते द्विर्वचने लक्षणप्रवृत्तिमन्तरेण स्वत एवाऽऽदेशरूपमवतिष्ठत इति कथं लोपस्य प्राप्तिरुच्यते। पुनः प्रवृत्तिर्लक्षणस्येति स्थानिवद्भावप्रकरणे प्रतिपादितम्।

अस्तु तर्हीति। 'अनन्त्यविकारेऽन्त्यसदेशस्ये'ति वचनात्। अथवा क्ङित्यनन्तरस्याऽकारस्य लोपः। तत्र येन नाव्यवधानमित्येकवर्णव्यवहितस्य लोपः। दीर्घत्वमिति। 'अत आदे'रित्यनेन। प्रत्यङ्गत्वादिति। वर्णाश्रयत्वात्पररूपमन्तरङ्गं, तत्र कृतेऽल्लोपे च सतुः सुरिति प्राप्नोति। दीर्घत्वमिति। येन नाप्राप्तिन्यायेन पररूपं बाधित्वा दीर्घत्वं भविष्यतीत्यर्थः। कुर्विति। अत्र 'न लुमताऽङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधादुत्वं न स्यादिति भूतपूर्वगत्यर्थात्सार्वधातुकग्रहणाद्भवति ॥

उ.]त्युच्यतेऽभ्यस्तस्येत्येवेति। चं विनाऽपि समुच्चयदर्शनादित्येव चोच्यत इत्यर्थः। नियतकालत्वादिति। 'द्विर्वचन एव कर्तव्य' इत्यवधारणान्नियतकालत्वं स्थानिवत्त्वस्योक्तम्। तत्र कृते द्वित्व आदेशरूपमेव चक्रतुरित्यादौ भवतीति पुनर्लोपाऽप्राप्तिरित्यर्थः। रूपातिदेश आह—पुनः प्रवृत्तिरिति। अत एव निन्यतुरित्यादौ पूर्वं प्रवृत्तोऽपीयङ् द्विर्वचनकालेऽपहृत इति पुनः प्रवृत्तौ प्राप्तायामनेकाच्त्वाद्यणा बाध्यत इत्यर्थः। 'परस्यैव लोप' इति नियमः कथमत आह—अनन्त्येति। अथवेति। आद्यस्योत्तरेणाऽव्यवधानादिति भावः। अनर्थकत्वाच्चेत्यपि बोध्यम्। प्रत्यङ्गत्वादित्यस्यान्तरङ्गत्वादित्यर्थ इत्याह—वर्णाश्रयत्वादिति। 'वार्णादाङ्ग'मित्यनाश्रित्येदम्। अतोऽन्तरङ्गस्य कथं बहिरङ्गं बाधकमत आह—येन नेति। ननु प्रत्ययलक्षणेन हेः परत्वसंभवे भूतपूर्वगत्याश्रयणमयुक्तमित्यत आह—अत्र नेति। न च सार्वधातुक इत्यस्याऽभाव उकारान्ताङ्गावयवकरोतेरत उदित्यर्थेन तृज्वत्सूत्रे युवोरनाकावित्यादौ च वक्ष्यमाणभाष्यरीत्याऽङ्गसंज्ञायाः प्रत्ययलक्षणेनाङ्गीकारेण कुर्वित्यत्र सिद्धमुत्वं सिद्धो लोपो हिलुक आभीयासिद्धत्वाच्चेति वाच्यम्। इदं तर्हीत्यादिकुर्वित्यन्तभाष्यस्यैकदेश्युक्तित्वात्। सार्वधातुकग्रहणं तु स्पष्टार्थमेवेति दिक्।

१ श्लोकवार्तिकम्। २ इदं क्वचिन्न। ३ 'प्राप्नोति'। ४ लुमम। ५ 'धातुकभूत'।

श्नसोरल्लोपः ॥ ६।४।१११ ॥

अथात्र तपरकरणं किमर्थम् ? ॥ इह मा भूत्—आस्ताम् आसन् ॥ नैतदस्ति प्रयोजनम् । आटोऽसिद्धत्वान्न भविष्यति ॥ [ श्नसोरल्लोपः ] ॥

इद्दरिद्रस्य ॥ ६।४।११४ ॥

॥*॥ दरिद्रातेरार्द्धधातुके लोपः ॥*॥ दरिद्रातेरार्द्धधातुके लोपो वक्तव्यः ॥*॥ सिद्धश्च प्रत्ययविधौ ॥*॥ स च सिद्धः प्रत्ययविधौ॥ किं प्रयोजनम् ?॥ दरिद्रातीति दरिद्रः। आकारान्तलक्षणः प्रत्ययविधिर्मा भूदिति ॥

॥*॥ न दरिद्रायके लोपो दरिद्राणे च नेष्यते ॥

दिदरिद्रासतीत्येके दिदरिद्रिषितीति वा ॥*॥

॥*॥अद्यतन्यां वा॥*॥अद्यतन्यां वेति वक्तव्यम् ।अदरिद्रीत् अदरिद्रासीत्॥

---

प्र.] श्नसोर। आस्तामिति। लङ् ताम्। अल्लोपे च कृते तस्याऽसिद्धत्वादाट्। नैतदस्तीति। अत्र प्रत्याख्यातं तपरकरणं, परस्तात्तु ज्ञापकत्वमस्य वक्ष्यते—'श्नसोरत्त्वे तकारेण ज्ञाप्यते त्वेत्त्वशासन'मिति। [ श्नसोरल्लोपः ] ॥

इद्दरि। सिद्धश्चेति। आर्द्धधातुक इति विषयसप्तमीत्यर्थः।आकारान्तलक्षण इति। यद्यार्द्धधातुक इति परसप्तमी स्यात्तदा दरिद्रातीति दरिद्र इत्यत्र 'श्याद्व्यधे'-ति णे कृते द्वयोरनित्ययोः परत्वाद्युक्स्यात्। लोपस्य शब्दान्तरप्राप्त्याऽनित्यत्वं, युकस्तु लोपे कृतेऽप्राप्त्याऽनित्यत्वम्। अथाप्याकृतिपक्षे नित्यत्वादाल्लोपः स्यात्तथाऽप्यदरिद्र इत्यत्राच्कावशक्तावित्यन्तोदात्तत्वं न स्यात्। ईषद्दरिद्रमित्यातो युजिति युच्प्रसज्येत। दिदरिद्रासतीति। 'तनिपतिदरिद्राणामुपसङ्ख्यान'मिति व्यवस्थितविभाषाविज्ञानाल्लोपपक्ष इडागमः। लोपाऽभावपक्षे त्विडभावः। अदरिद्रासीदिति। 'यमरमे'त्यत्र 'एकाच' इत्यधिकारादेकाचः सगिटावित्येकीयमतमित्यनेकाचोऽपि भवतः। चिणि—अदरिद्रि अदरिद्रायीति भवति। [इद्दरिद्रस्य] ॥

---

उ.] श्नसोर। तस्यासिद्धत्वादिति। न चैवं लक्ष्ये लक्षणस्येति न्यायेन पुनर्लोपाऽप्रवृत्त्या तपरत्वाऽभावेऽपि न दोषः। लक्ष्यभेदात्। [श्नसोरल्लोपः] ॥

इद्दरिद्रस्य। सौत्रो निर्देशः। द्वयोः—लोपयुकोः। शब्दान्तरेति। अकृते युक्याकारस्य, कृते यकारस्येत्यर्थः। अर्थाऽऽकृतीति। अत्र पक्षे व्यक्तिभेदाविवक्षणाच्छब्दान्तरप्राप्त्या नाऽनित्यत्वम्। अच्कावशक्तायिति। नञ उत्तरस्याजन्तस्य कान्तस्य चोत्तरपदस्याऽशक्तौ गम्यमानायामन्त उदात्त इति तदर्थः। युच् प्रसज्येतेति। खलिष्यत इति भावः। ननु लोपपक्ष इट्, तदभावे नेति कुतोऽत आह—तनिपतीति। वस्तुतस्त्विद्दक्ष आतो इटि चेत्यालोपः। इडभावेऽनेन प्राप्तलोपस्य

---

१ श्लोकवार्त्तिकम्। २ 'वाऽद्यतन्यां'। ३ 'थाकृ'। ४ 'थाप्याकृ'।

## अत एकहल्मध्येऽनादेशादेर्लिटि ॥ ६।४।१२० ॥

॥*॥ णकारषकारादेशादेरेत्त्ववचनं लिटि ॥*॥ णकारषकारादेशादेरेत्त्वं लिटि वक्तव्यम् ॥ नेमतुः नेमुः । सेहे सेहाते सेहिरे ॥ किं पुनः कारणं न सिध्यति ? ॥ अनादेशादेरिति प्रतिषेधः प्राप्नोति ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । लिटाऽत्राऽऽदेशादिं विशेषयिष्यामो 'लिटि य आदेशादिस्तस्य ने'ति ॥ अस्त्यन्यल्लिङ्ग्रहणस्य प्रयोजनम् ॥ किम् ? ॥ इह मा भूत्-पक्ता पक्तुम् ॥ नैतदस्ति प्रयोजनम् । क्ङितीति वर्तते ॥ एवमपि-पक्वः पक्ववानित्यत्र प्राप्नोति ॥ अभ्यासलोपसंनियोगेनैत्त्वमुच्यते न चात्राभ्यासलोपं पश्यामः॥ एवमपि-पापच्यते-अत्र प्राप्नोति॥दीर्घत्वमत्र बाधकं भविष्यति ॥ नाप्राप्तेऽभ्यासविकार एत्त्वमारभ्यते तद्यथाऽन्यानभ्यासविकारान्बाधत एवं दीर्घत्वमपि बाधेत ॥ सत्यमेवमेतत् । अभ्यासविकारेष्वपि तु ज्येष्ठमध्यमकनीयांसः प्रकारा भवन्ति । तत्र ह्रस्वहलादिशेषावुत्सर्गौ, तयोर्दीर्घत्वमप-

प्र.] अतः एकहल्म । लिटि य आदेशादिरिति । नत्वसत्वयोरनैमित्तिकत्वाल्लिण्निमित्तकत्वाऽभावः । अभ्यासलोपसंनियोगेनेति । 'अभ्यासलोपश्चे'ति चशब्दः समुच्चये, नत्वन्वाचये । दीर्घत्वमत्रेति । 'अभ्यासविकारेषु बाधका न बाधन्त' इत्येतत्तु यत्र सर्वेषां प्रवृत्तिस्तत्राऽऽश्रीयते । यद्यपि कृते दीर्घत्व एत्वाभ्यासलोपप्रसङ्गस्तथाऽप्येत्वाभ्यासलोपयोः कृतयोर्दीर्घत्वाऽप्रसङ्ग इति विरुद्धत्वादबाधकत्वाऽभावः।नाप्राप्त इति।क्वचिद्ध्रस्वः क्वचिद्धलादिः शेषश्च प्राप्नोति। ज्येष्ठमध्यमकनी-

उ.]तु स निषेध इति व्यवस्थितविभाषात्वाङ्गीकारो वृथैवेति बोध्यम् । 'अद्यतनी'-शब्देन पूर्वाचार्यप्रसिद्ध्या लुङुच्यते ॥ [ इद्दरिद्रस्य ] ॥

अतः एकह । भाष्ये-लिटि य इति । सौत्रत्वाच्च वृत्तिरिति भावः।समुच्चय इति । तस्य प्रसिद्धतरत्वादिति भावः । अन्वाचयस्तु गमके सत्येवेति तात्पर्यम् । भाष्ये-दीर्घत्वमत्र बाधकमिति । परत्वादिति भावः । इत्येतत्त्विति । सर्वेषां प्रवृत्त्या यत्रोत्सर्गापवादयोरविरोधस्तत्रायं न्यायो,यथा नर्नर्तीत्यादावुरदत्वे रुगादयः क्रियन्ते , इह तु विरोधादयं न्यायो नेति भावः । तमेव विरोधं दर्शयति-यद्यपीति । इदं चिन्त्यम् । नुकि कृतेऽजन्ताभ्यासाऽभावेन दीर्घाऽप्राप्त्या 'दीर्घोऽकित' इति धर्मिग्राहकमानविरोधात् । मानादीनां दीर्घे कृत इत्त्वाऽप्राप्त्या 'मीमांसत' इति तदुदाहरणपरगुणो यङ्लुकोर्मान्वधेत्यादिसूत्रस्थभाष्यविरोधाच्च । तस्माज्ज्ञापकसिद्धस्याऽसार्वत्रिकत्वेनाऽनित्यत्वात्तस्यात्रानाश्रयणमिति भगवतो भाष्यकारस्याऽभिप्रायः। क्वचिद्ध्रस्व इति । अभ्यासविकारेष्वेतौ द्वावुत्सर्गौ तयोरन्येऽपवादा इति भावः ।

१ 'कारादेरेत्त्ववचनं'। २ 'स्तदादेर्नेति' । ३ 'तद्यथासाव' । ४ 'बाधते' । ५ 'मध्यकनी' । ६ 'त्वादत्र वा' । ७ 'त्वाभावाभावः' ।

वाद एत्त्वं च। अपवादविप्रतिषेधाद्दीर्घत्वं भविष्यति ॥ इह¹ तर्हि बभणतुः बभणुरिति, अभ्यासादेशस्यासिद्धत्वादेत्त्वं प्राप्नोति॥*॥ फलि²भजिग्रहणं तु ज्ञापकमभ्यासादेशसिद्धत्वस्य ॥*॥ यदयं फलिभज्योर्ग्रहणं करोति तज्ज्ञापयत्याचार्यः–'सिद्धोऽभ्यास³देश एत्त्व' इति॥ यद्येवं–॥*॥ प्रथमतृतीयादीनामादेशादित्वादेत्त्वाऽभावः॥*॥प्रथमतृतीयादीनामपि तर्ह्यादेशादित्वादेत्त्वं न प्राप्नोति। पेचै⁴तुः पेचुः। देभतुः देभुः ॥*॥ न वा शसिदद्योः प्रतिषेधो ज्ञापको रूपाऽभेद एत्वविज्ञा⁶नस्य ॥*॥ न चैष दोषः ॥ किं कारणम्? ॥ 'शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेद एत्त्वविज्ञानस्य'। यदयं शसिदद्योः प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो–'रूपाभेदेन य आदेशादयो न तेषां⁷ प्रतिषेधो भवती'ति॥

॥*॥ दम्भ एत्वम् ॥*॥ दम्भ एत्त्वं वक्तव्यम्। देभतुः देभुः ॥ किं पुनः कारणं न सिध्यति? ॥*॥ नलोपस्यासिद्धत्वात्॥*॥ असिद्धो नलोपस्तस्यासिद्धत्वादेत्त्वं न प्राप्नोति ॥*॥ नशिमन्योरलिट्येत्वम ॥*॥ नशिमन्योरलिट्येत्त्वं वक्तव्यम् ॥*॥ छन्दस्यमिपचोरपि। छन्दस्यमिपचोरपीति वक्तव्यम् ॥ किं प्रयोजनम्? ॥

---

प्र.]यांस इति। मध्यमापेक्षयोत्सर्गस्य प्रकर्षसद्भावात्कनीयानुत्सर्गोऽल्पतर इत्यर्थः। मध्यमोः–यः कस्यचिद्बाधकः कस्यचिद्बाध्यः। ज्येष्ठो–यो बाधकस्यापि बाधकः। असिद्धत्वादिति। पूर्वत्रासिद्धमिति लक्षणेनाऽचकणतुरित्यादेव तु स्यात्। पेचतुरिति। 'प्रकृतिचरां प्रकृतिचरः प्रकृतिजशां प्रकृतिजश' इत्यादेशादित्वम्। वचनं तु रेणतुर्येमतुरित्यादौ सावकाशम्। अभ्यासे चर्चेति जश्चरोः प्राप्तयोः 'स्थानेऽन्तरतम' इति परिभाषाया व्यापारप्रदर्शनमिदं–'प्रकृतिचरां प्रकृतिचरः

---

उ.]ननु विनाऽवधिं ज्येष्ठत्वादिकं न संभवतीत्यत आह–मध्यमापेक्षयेति। प्रकर्षो दुर्बलत्वरूपबाध्यत्वमात्रकृतः। ज्येष्ठत्वमपि तत एवेत्याह–ज्येष्ठो य इति। तत्र दीर्घोवकाशो–बाभाम्यते। एत्त्वस्य–पेचतुः। पापच्यत इत्यत्रोभयप्राप्तौ दीर्घत्वेनायं विधिर्बाध्यते। नन्वनादेशादेरिति व्यर्थं स्यादत आह–चकणतुरिति। अत्र 'कुहोश्चु'रिति चुत्वं तच्च नाऽसिद्धम्। रेणतुरिति। अत्र जश्त्वचर्त्वे न, झलोऽभावात्। ननु प्रकृतिचरामिति न सूत्रवार्तिकयोः पठ्यते तत्किमिदमत आह–अभ्यास इति। एवं त्विति। छन्दसीत्यस्य संबन्ध इत्यर्थः। 'चेष्टा व्यनेशन्निखिलास्तदाऽस्याः' इति श्रीहर्षस्य तु प्रमादः। चानशिति। ननु शानच्। धातोः

---

१ इदं क्वचिन्न। २ 'फलभजि'। अस्य व्याख्योह्या। ३ 'अभ्यासादेशः सिद्ध एत्त्वे'। ४ 'पेचतुः देभतुः पेचुः देभुः'। ५'शस'। ६ 'विधानस्य'। ७ 'तेभ्यः'। ८ श्लोकवार्तिकम्।

॥*॥ 'अनेशं मेनकेत्येतद्व्येमानं लिङि पेचिरन् ॥१॥

यजिवप्योश्च वक्तव्यम्—' ॥*॥

यज्—आयेजे । वप्—आवेपे ॥

॥*॥—'दम्भ एत्वमलक्षणम्' ।

[असिद्धत्वान्नलोपस्य दम्भ एत्वं न सिध्यति] ।

श्नशोरत्वे तकारेण ज्ञाप्यते त्वेत्त्वशासनम् ॥*॥

अनित्योऽयं विधिरिति । [ अत एकहल्मध्ये ] ॥

## थलि च सेटि ॥ ६।४।१२१ ॥

थल्ग्रहणं किमर्थम् ? ॥*॥ थल्ग्रहणमक्किदर्थम् ॥*॥ थल्ग्रहणं क्रियते॥ [ किं प्रयोजनम् ? ॥ ] 'अक्किदर्थम्' । अक्कित्येत्त्वं यथा स्यात् । पेचिथ शेकिथ ॥ नैतदस्ति प्रयोजनम् । सेड्ग्रहणमेवात्राऽक्किदर्थं भविष्यति ॥

इदं तर्हि प्रयोजनं, समुच्चयो यथा विज्ञायेत । थलि च सेटि क्किति च सेटीति ॥ किं प्रयोजनम् ? ॥ पेचिव पेचिम । तत्र 'पचादिभ्य इड्वचन'-मिति वक्ष्यति तन्न वक्तव्यं भवति ॥

---

प्र.]प्रकृतिजशां प्रकृतिजश'इति। अनेशमिति। लुङ् मिपोऽम्भावः। पुषादित्वादङा-देशः । छन्दसीति पूर्वेणापि सम्बन्धाद्भाषायामेत्त्वाऽभावः । एवं तु मेनकेत्यपि भाषायां न प्राप्नोति । यदि त्विष्यते पृषोदरादित्वाद्भविष्यति । मनेराशिषि चेति वुन्प्रत्ययः । न यासयोरित्यत्राऽऽशिषि चोपसङ्ख्यानमितीत्त्वाऽभावः । व्येमान-मिति । विपूर्वादमतेस्ताच्छील्यादिषु चानश् । छान्दसः शपो लुक् । पेचिर-न्निति । पचेरन्निति प्राप्ते छान्दसे एत्वहस्वत्वे क्रियेते । आयेजे इति । लङ् इट् शप् । 'छन्दस्यपि दृश्यत' इत्याट् । दम्भ एत्वमलक्षणमिति । लक्षणेन न प्राप्नोति, नलोपस्याऽसिद्धत्वादित्यर्थः । श्नसोरत्त्व इति । असिद्धत्वस्याऽनित्यत्व-ज्ञापनाय तकारः कृतः । नित्ये ह्यसिद्धत्व आसन्नित्यादावाटोऽसिद्धत्वाल्लोपो न भविष्यतीति किं तन्निवृत्त्यर्थेन तकारेण, तेनाऽसिद्धत्वस्याऽभावाद्दम्भ एत्वं सिध्यतीत्यर्थः । [ अत एकहल्मध्ये ] ॥

थलि च । थल्ग्रहणमिति । क्किति सेड्व्येत्त्वस्य सिद्धत्वात्सेड्ग्रहणमेवाक्किदर्थं भविष्यति, थलेव च सेडक्किदिति प्रश्नः। क्किति च सेटीति । यथा पेचिव पेचि-

---

उ.]परस्मैपदित्वात् । लुक्–'बहुलं छन्दसी'त्यनेन। अत एव मुगभावः। लङिति। केचित्तु यजेराङ्पूर्वस्येदम् । अत एव 'मनुरायेजे' इत्यत्राऽवग्रहं कुर्वन्तीत्याहुः ।

थलि च । ननु क्रादिसूत्रस्य नियमार्थत्वेन पेचिवेत्यादाविटः सिद्धत्वात्किम-

---

१ 'अनेशन्मे' । २ 'यजायेजे वपावेपे' । ३ 'यज आयेजे वप आवेपे' ।
४ इदं सा[illegible]मिव्यव[illegible]। ५ 'ज्ञायते' । ६ असिद्धवदत्रेति विधिः । ७ [illegible] स्यात् । ८ 'स्यात्' ।

इह कस्मान्न भवति लुलविथ ? ॥ गुणस्येति नेति प्रतिषेधात् ॥ इहापि तर्हि न प्राप्नोति–पेचिथ शेकिथ ॥ गुणस्य योऽकार इत्येवमेतद्विज्ञास्यते ॥

प्र.]सेति। इदं वचनं न नियमार्थं–'सेट्येव क्ङिति' इति। नियमे हि पेचतुरित्यादौ न स्यात्। किं तर्ह्येत्त्वस्य कालावधारणं क्रियते,–यदा निष्ठायां सेटीत्यत्र। तेन पेचिवेत्यादाविटि कृत एत्त्वाभ्यासलोपौ भवतः। अन्यथैकाच इतीट्प्रतिषेधः प्रसज्येत। यदोपदेशग्रहणमनुदात्तविशेषणं नैकाज्विशेषणं तदा श्रूयमाणादेकाच इट्प्रतिषेधेन भाव्यमिति 'कृसृभृ' इति सूत्रं विध्यर्थं भवति नतु नियमार्थम्। तत्र पचेरेत्त्वाभ्यासलोपयोः कृतयोरेकाच्त्वादिट्प्रतिषेधप्रसङ्गे 'पचादिभ्य इड्वचन'मिति वक्ष्यते। क्ङिति च सेटीति तु कालावधारणार्थे सति पूर्वमिट् तत एत्वाभ्यासलोपावित्यानुपूर्व्या सिद्धं भवतीति नार्थो वचनेन। लुलविथेति। अवादेशे कृत एकहल्मध्यगतोऽकार इत्येत्वप्रसङ्गः। समुदायग्रहणे च लक्षणप्रतिपदोक्तपरिभाषोपतिष्ठते न वर्णमात्रग्रहणे। न चायमकारो गुणशब्दाभिनिर्वृत्त इति 'न शसददे'ति प्रतिषेधोऽपि नास्तीति प्रश्नः। 'गुणस्य योऽकार' इति वैयधिकरण्येन सम्बन्ध आश्रीयते। लुलविथेत्यादावोकारस्याऽवादेशविधानाद्गुणस्याऽकार इति प्रतिषेधः प्रवर्तते। पेचिथेत्यादौ तु गुण एवाऽकारो न तु गुणस्येति प्रतिषेधाऽभावः।

उ.]नेन वचनेनेत्यत आह–यदोपदेशग्रहणमिति।नाप्येकाच इति विहितविशेषणमित्यपि बोध्यम्। अनेनास्य ग्रन्थस्यैकदेश्युक्तिता सूचिता। एवं च थल्ग्रहणं स्पष्टार्थमिति तत्त्वम्। विध्यर्थमिति। निषेधविध्यर्थमित्यर्थः। आनुपूर्व्येति। पूर्वं द्वित्वे इट्, तत एत्वादीति क्रमेणेत्यर्थः। नार्थो वचनेनेति। 'पचादिभ्य इड्वचन'मित्यनेनेति भावः। नन्वस्याऽकारस्य लाक्षणिकत्वान्नायं दोषोऽत आह–समुदायेति। नन्वेवं सति 'ओत्', 'कृन्मेजन्त' इत्यादिसूत्रस्थभाष्यस्वग्रन्थविरोधोऽत आह–न वर्णमात्रेति। तत्रौदन्तो निपात एजन्तः कृदित्यर्थाच्च वर्णमात्रग्रहणमिति भावः। तस्या अनित्यत्वादिति तत्त्वम्। ननु 'न शसददे'त्यादिना प्रतिषेधो भविष्यतीत्यत आह–न चायमिति। तत्र गुणशब्दः स्वरूपपरः 'गुण इत्येवं योऽकार' इति। अन्यथा विधिप्रतिषेधयोरेकविषयत्वाद्विकल्पः स्यादिति भावः। वैयधिकरण्येनेति। गुणशब्दभावितसंवन्ध्यकार इत्यर्थः। अकारस्य गुणसंवन्धित्वं गुणस्थानिकावयवत्वेन बोध्यम्। व्याख्यानेन च साक्षात्परम्परया वा गुणशब्दभावितसंवन्ध्यकारग्रहणमिति भावः। अयं गुण इति। यदागमन्यायेन विशिष्ट एव गुणादिसंज्ञक इति भावः। एतच्चोरणित्यत्रोपपादितम्। एतेन पेचिथेत्यादौ व्यपदेशिवद्भावेन गुणावयवत्वसत्त्वान्निषेधापत्तिरिति निरस्तम्। गुणशब्दभावितसंवन्धी-

१ 'गुणस्येति प्र'। २ 'शसददवादिगुणानामिति'।

एवमपि,—शशरिथ—अत्र प्राप्नोति ॥ गुणस्यैषोऽकारः ॥ कथम् ?॥ वृद्धिर्भवति गुणो भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्त्तते ॥

अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति–'नैवं जातीयकानामेत्त्वं भवती'ति यदयं तृफलभजत्रपश्चेति तृग्रहणं करोति । [ थलि च सेटि ] ॥

## राधो हिंसायाम् ॥ ६।४।१२३ ॥

॥*॥ राधादिषु स्थानिनिर्देशः ॥*॥ राधादिषु स्थानिनिर्देशः कर्तव्यः। [ स तर्हि स्थानिनिर्देशः कर्तव्यः ? ] ॥ न कर्तव्यः । एकहल्मध्य इति वर्तते ॥ यद्येवं–त्रेसतुः त्रेसुः–रशब्दस्यैत्त्वं प्राप्नोति ॥ अस्तु । अलोऽन्त्यस्य विधयो भवन्तीत्यकारस्य भविष्यति ॥ 'अनर्थकेऽलोऽन्त्यविधिर्ने'त्येवं न प्राप्नोति ॥ नैतस्याः परिभाषायाः सन्ति प्रयोजनानि ॥ अथवाऽत इति वर्तते ॥ एवमपि राधेर्न प्राप्नोति ॥ आकारग्रहणमपि प्रकृतमनुवर्तते ॥ क प्रकृतम् ? ॥ 'श्नाभ्यस्तयोरातः' इति ॥ अथवा 'श्नसोरल्लोपः' इत्यत्र तपरकरणं प्रत्याख्यायते तत्प्रकृतमिहानुवर्तिष्यते॥ यदि तदनुवर्त्तते एकहल्मध्येऽनादेशादेर्लिटि अस्य चेत्यवर्णमात्रस्यैत्वं प्राप्नोति । ववाधे ॥ अकारेण तपरेणाऽवर्णं विशेषयिष्यामः,–अस्यात इति ॥ इहेदानीमस्येत्यनुवर्त्ततेऽत इति निवृत्तम् । [ राधो हिंसायाम् ] ॥

## अर्वणस्त्रसावनञः॥६।४।१२७॥मघवा बहुलम्॥६।४।१२८ ॥

॥*॥ अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् ॥*॥ अर्वणस्तृ

---

प्र.]एवमपीति । गुण एवात्राप्यकारो नतु गुणस्येति प्रतिषेधाऽप्रसङ्गः। गुणस्येति। अवयव इत्यर्थः । उः स्थानेऽण् प्रसज्यमान एव रपरो भवति, पूर्वभक्तश्च रेफ इत्ययं गुणः । [ थलि च सेटि ] ॥

राधो हिं । राधादिषु स्थानिनिर्देश इति । अलोऽन्त्यस्येति वचनादेत्त्वमन्त्यस्यप्राप्नोतीत्युपधाया इति वक्तव्यमित्यर्थः । अथवाऽत इति । ततो भ्रमादीनामेवैत्वमकारस्य भवति । अकारेणेति । समुच्चयेऽत इत्यनर्थकं स्यादिति विशेषणविशेष्यभावाश्रयः । [राधो हिंसायाम् ] ॥

अर्वणस्तृ । मघवा बहुलम् । छान्दसमिति । 'छन्दसीवनिपा'विति वनि-

---

उ.]त्यर्थकरणात् । [ थलि च सेटि ] ॥

राधो हिं । भ्रमादीनामेवैत्त्वमकारस्येति । एवो भिन्नक्रमः। अकारस्यैवैत्वं नान्यस्येत्यर्थः । [ राधो हिंसायाम् ] ॥

अवर्णस्त्र । ननु च्छान्दसत्वेन प्रत्याख्यानमयुक्तम् । छान्दसेऽपि साधुला-

---

१कचिन्न । २लुमः स्यादयं पाठः । ३'नैति एवं च न'.'इत्वं न न' ४श्लोकवार्तिकम्।

मघोनश्च न शिष्यम् ॥ किं कारणम् ?॥ 'छान्दसं हि तत्' । दृष्टानुविधिश्छन्दसि भवतीति[1] ॥*॥ मतुब्वन्योर्विधानाच्च ॥*॥ मतुब्वनी खल्वपि च्छन्दसि विधीयेते ॥*॥ छन्दस्युभयदर्शनात्[2] ॥*॥ उभयं खल्वपि च्छन्दसि दृश्यते । इमान्यर्वणः[3] पदानि। अनर्वाणं वृषभं मन्द्रजिह्वम्[4] । इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य चतुर्थे पादे तृतीयमाह्निकम् ।

पादः पत् ॥ ६।४।१३० ॥

॥*॥ पाद उपधाह्रस्वत्वम् ॥*॥ पाद उपधाह्रस्वत्वं वक्तव्यम् । द्विपदः

---

प्र.]वस्ति मतुप् चेति प्रत्ययद्वयेन रूपद्वयस्य सिद्धत्वान्नार्थः सूत्रद्वयेन।तत्रैतस्यात्सर्वत्र रूपद्वयप्रसङ्गोऽत आह—दृष्टानुविधिरिति । भाषाशब्दा अपि नियतविषयाः किं पुनश्छान्दसाः । तत्र 'ऋ' इत्यस्य विचि गुणे कृतेऽरिति रूपं, तस्मान्मतुप्यर्वन्तावित्यादि भवति । वनिप्यर्वण इत्यादि भवति । मघशब्दादपि प्रत्ययद्वये यथाविषयं रूपद्वयं सिद्धम् । एवं चार्वच्छब्दस्य मघवच्छब्दस्य च भाषायां नास्ति प्रयोग इत्युक्तं भवति । इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य चतुर्थे पादे तृतीयमाह्निकम् ॥

---

उ.]न्वाख्यानस्य कर्तव्यत्वादत आह—छन्दसीति।वार्तिके, मतुब्वन्योर्विधानाच्चे'ति चो हेताविति तात्पर्यम् । सर्वत्रेति । सावपीत्यर्थः । यद्यपि भाषायामपि दृष्टमेवानुविधीयते तथाऽपि कैमुतिकन्यायप्रदर्शनायेदमुक्तमित्याह—भाषाशब्दा अपीति । यथा वचेरन्तिपरस्य प्रयोगाऽभाव इति भावः । 'मघोन' इत्यादौ यस्येति लोपाऽभावस्तु च्छान्दसत्वाद्बोध्यः । श्वयुवमघोनामिति निर्देशाद्वा । विचीति । 'अन्येभ्योऽपि दृश्यत' इति विच् । मघशब्दादपीति । मघशब्दो धननाम । अतिप्रसङ्गवारणायाऽऽह—यथाविषयमिति । भाषायां नास्ति प्रयोग इति । असिद्धवत्सूत्रेऽप्युक्तस्याव्युत्पन्नप्रातिपदिकरूपस्यापि भाषायां नास्ति प्रयोगः, नियतविषयत्वाच्छब्दानामित्यपि बोध्यम् । भाषायामपि क्वचिद्दृश्यमानप्रयोगास्त्वसाधव एव । सूत्रारम्भेऽप्यर्वन्शब्द इमान्यर्वण इत्यादौ दृश्यमानत्रभावस्य च्छान्दसत्वेनैव साधनमावश्यकमिति वरं तदकरणमित्याह भाष्य—उभयं खल्वपीति । 'अनर्वाणं वृषभ'मिति तु दृष्टान्तार्थम् । मघवन्शब्दे सूत्रकृतोऽपि विकल्पस्येष्टत्वेनार्वच्छब्दविषयकमेवोदाहरणदानमिति बोध्यम् । इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य चतुर्थे पादे तृतीयमाह्निकम् ॥

पादः पत् । भाष्ये—येन विधिरिति । तया परिभाषया समुदायस्य स्थानि-

---

१ 'भवति'।२ श्लोकवार्त्तिकम् । ३ 'न्यर्वतः' । ४ 'मन्त्र'। ५ लुप्तं स्यात् ।

पद्य ॥*॥ आदेशे हि सर्वादेशप्रसङ्गः ॥*॥ आदेशे हि सति सर्वादेशः प्रसज्येत । सर्वस्य द्विपाच्छब्दस्य त्रिपाच्छब्दस्य च पच्छब्द आदेशः प्रसज्येत—येन विधिस्तदन्तस्येति॥ तत्तर्हि वक्तव्यम् ? ॥*॥ न वा निर्दिश्यमानस्याऽऽदेशत्वात् ॥*॥ न वा वक्तव्यम् ॥ किं कारणम् ? ॥ [ 'निर्दिश्यमानस्यादेशत्वात्' ] । निर्दिश्यमानस्याऽऽदेशा भवन्तीत्येषा परिभाषा कर्तव्या। कः पुनरत्र विशेष एषा वा परिभाषा क्रियेतोपधाह्रस्वत्वं वोच्येत ? ॥

अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि ॥ कानि पुनस्तानि प्रयोजनानि ? ॥

॥*॥ प्रयोजनं सुप्तिङादेशे ॥*॥ [ सुप्तिङादेशेषु प्रयोजनम् ] ॥ सुप्—कुमार्याम् किशोर्याम् । खट्वायाम् मालायाम् । तस्याम् यस्याम् । आड्याट्स्याट्सु कृतेषु साड्याट्स्याट्स्याऽऽम्प्राप्नोति । निर्दिश्यमानस्याऽऽदेशा भवन्तीति न दोषो भवति ॥ इदमिह संप्रधार्यम्—आड्याट्स्याटः क्रियन्तामामिति, किमत्र कर्तव्यम् ? ॥ परत्वादाम् ॥ नित्या आड्याट्स्याटः । कृतेऽप्यामि प्राप्नुवन्त्यकृतेऽपि ॥ अनित्या आड्याट्स्याटः ॥ कथम् ? ॥ अन्यस्य कृते आमि प्राप्नुवन्त्यस्याकृते । शब्दान्तरस्य च प्राप्नुवन्तोऽनित्या भवन्ति। उभयोरनित्ययोः परत्वादाम् ॥ इदं तर्हि—तस्यै यस्यै। स्याटि कृते सस्याङ्गस्य

---

प्र.] पादःपत् । आदेशे हीति। पादन्तस्याङ्गस्य पदादेशो विधीयमानोऽनेकाल्त्वात्सर्वादेशः प्राप्नोति।न वेति।यद्यपि पाच्छब्देन तदन्तः समुदायःप्रत्याय्यते तथाऽपि यो निर्दिश्यते यतः षष्ठी श्रूयते तस्यैव 'षष्ठी स्थानेयोगे'ति वचनादादेशो नतु प्रतीयमानस्य । यद्यप्युच्चार्यमाणस्यानुकरणस्यादेशेन संबन्धाऽभावस्तथाऽप्यनुकार्यानुकरणयोर्भेदस्याऽविवक्षितत्वादेवमुक्तम् । तत्र यथाऽलोऽन्त्यस्येति वचनाद्रुहः प इत्युक्ते [रुहि]हकारस्य पकारो भवत्येवं पाच्छब्दप्रत्यायिततदन्तसमुदायस्य पाच्छब्दस्य पदादेशः । न दोषो भवतीति । तत्रैवं वक्तव्यम् ,—यो निर्दिश्यते तस्या-

---

उ.]वत्वादिति भावः । षष्ठी स्थान इति । इदं हि सूत्रं निर्दिश्यमानस्याऽऽदेशा इत्यर्थकतया तत्रैव सूत्रे भाष्ये स्थापितम् । यद्यप्युच्चार्यमाणस्येति । किंतु तत्प्रत्यायितस्यानुकार्यस्येत्यर्थः । भेदस्याविवक्षितत्वादिति । सादृश्यमूलिका च तदविवक्षेति । समुदायस्य पाच्छब्दस्येति । तदवयवस्य पाच्छब्दस्येत्यर्थः । क्वचित्तथैव पाठः । तत्रैवमिति । निर्दिश्यमानपरिभाषया दोषाऽभावे कथितेऽयमपरो दोषः प्राप्नोतीत्यर्थः। अत्रैवमिति क्वचित्पाठः । यतो वाद्यन्तरेणैवं वक्तव्यम् अतः

---

१लुप्तं स्यात् । २'क्रियते' । ३ 'उच्यते' । ४ 'कानि' । ५ 'देशेषु' । ६'तीति'। ७क्वचिन्न। ८'प्राप्नुवन्निमित्तानित्यो भवति' । ९ 'तर्हि' । १० 'स्याऽऽदे'।

स्मैभावः प्राप्नोति । निर्दिश्यमानस्याऽऽदेशा भवन्तीति न दोषो भवति ॥ यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ?॥ स्याटा व्यवहितत्वात् । सुप् ॥ तिङ्—अरुदिताम् अरुदितम् अरुदितेति । इटि कृते सेङ्कस्य ताम्तंस्तादेशाः प्राप्नुवन्ति । निर्दिश्यमानस्याऽऽदेशा भवन्तीति न दोषो भवति ॥ इदमिह संप्रधार्यम्—इट्क्रियतां ताम्तम्ताम इति;किमत्र कर्तव्यम् ?॥परत्वादिडागमः। अन्तरङ्गास्ताम्तम्तामः ॥ इदं तर्हि क्रियास्ताम् क्रियास्तम् क्रियास्त क्रियास्म् । यासुटि कृते सयासुङ्कस्य ताम्तम्तामः प्राप्नुवन्ति। 'निर्दिश्यमानस्याऽऽदेशा भवन्ती'ति न दोषो भवति॥*॥ ल्यब्भावे च ॥*॥ ल्यब्भावे च प्रयोजनम् । प्रकृत्य प्रहृत्य । क्त्वान्तस्य ल्यप्प्राप्नोति । 'निर्दिश्यमानस्याऽऽदेशा

प्र.]गमैर्व्यवधानादाम्न प्राप्नोति। अत एव परत्वाश्रयेणाऽव्यवधानं कर्तुमाह—इदमिहेति । आडादीनामवकाशः,—खट्वायाः कुमार्याः सर्वस्यै इति । आमोऽवकाशः, कृतेष्वाडादिषु,वचनाद्व्यवधानेऽपि प्रवर्त्तनात्।यदि तु नाप्राप्तेष्वाडादिष्वामादेश आरभ्यत इत्युच्यते ततोऽपवादत्वादामा तेषां बाधः प्राप्नोतीत्यागमानामादेशस्य चात्र समावेश एष्टव्यः । सेङ्कस्येति । 'प्राग्लादेशेभ्यो धात्वधिकार' इत्यस्मिन्पक्षेऽवध्यनुपादानाद्व्यवधानात्तामादीनामप्रसङ्ग इति नोच्यते । अन्तरङ्गा इति । प्राग्लादेशेभ्यो धात्वधिकारात्तामादयोऽन्तरङ्गाः । क्रियास्तामिति । परत्वादन्तरङ्गत्वाद्वा यासुटि कृते तामादयः । क्त्वान्तस्येति । प्रत्ययग्रहणपरिभाषया धातुप्रत्ययसमु-

उ.]परिभाषया दोषनिरासोऽसिद्धोऽतः प्रकारान्तरेण परिहारः कथ्यत इत्याह—अत एवेति । कृतेष्विति युक्तेर्न्यायविरुद्धत्वमाह—यदि त्विति । एष्टव्य इति । इष्टिरूपेण पठितव्य इत्यर्थः । अत एव 'क्रियाया'मित्यादिनिर्देशाः सङ्गच्छन्ते। निर्दिश्यमानत्वाऽभावाद्विशिष्टस्य न, व्यवधानात्केवलस्य नेत्येवमामो निरवकाशत्वाद्वचनसामर्थ्येन पूर्वं प्रवृत्तिस्ततः स्याडादय इति न दोषो भवतीत्यन्तभाष्यस्याऽऽशयः । इदमिहेत्यादिनैकदेशिना परत्वादामित्युक्ते, परेण तस्यै इत्यादौ परिभाषाप्रयोजने प्रदर्शिते,उभयसाधारण्येनाऽऽह—यस्तर्हीति परे । ननु निर्दिश्यमानपरिभाषाङ्गीकारेऽपि निर्दिश्यमानतसादीनामिटा व्यवधानान्न प्राप्नुवन्तीत्यत आह—प्राग्लादेशेभ्य इति । तमभिव्याप्य धातोरित्यधिकारेऽपि विहितपञ्चम्याश्रयणान्न दोषः, निर्दिष्टपरिभाषानपेक्षणाच्च तामादीनामन्तरङ्गत्वमित्यपि बोध्यम् । अन्तरङ्गत्वाद्वेति । 'आद्युदात्तश्चे'ति भाष्यरीत्या 'लावस्थायां यासु'डिति तत्त्वमिति भावः । धातोर्विहिततसादीनामित्यर्थात्तेन व्यवधानादप्रसङ्ग इति न शङ्क्यम् । क्त्वान्तस्य ल्यप्प्राप्तिमुपपादयति—प्रत्ययग्रहणेति । ननु कृद्ग्रहणपरिभाषया सोपसर्गस्य समुदायस्य

१ 'तामादेशाः'। २ 'अत्रैवं' । ३ क्वचिन्न । ४ 'स्यामिति' ।

भवन्ती'ति न दोषो भवति ॥*॥ त्रिचतुर्युष्मदस्मत्त्यदादिविकारेषु च ॥*॥ त्रिचतुर्युष्मदस्मत्त्यदादिविकारेषु च प्रयोजनम् । [ त्रिचतुः— ] अतितिस्रः अतिचतस्रः । त्रिचतुरन्तस्येति तिसृचतसृभावः प्राप्नोति । 'निर्दिश्यमानस्याऽऽदेशा भवन्ती'ति न दोषो भवति । [ त्रिचतुः ] ॥ युष्मदस्मत्—अतियूयम् अतिवयम् । युष्मदस्मदन्तस्येति यूयवयौ प्राप्नुतः । 'निर्दिश्यमानस्याऽऽदेशा भवन्ती'ति न दोषो भवति । [ युष्मदस्मत् ] ॥ त्यदादिविकारे—अतिस्यः उत्तमस्यः । अत्यसौ उत्तमासौ । त्यदाद्यन्तस्येति त्यदादिविकाराः प्राप्नुवन्ति ॥[*॥ किमः कादेशे च ॥*॥ किमः कादेशे च प्रयोजनम्]॥ किमन्तस्य कादेशः प्राप्नोति । अतिकः परमकः । 'निर्दिश्यमानस्याऽऽदेशा भवन्ती'ति न दोषो भवति । ॥*॥ उदः पूर्वत्वे ॥*॥ उदः स्थास्तम्भोः पूर्वत्वे प्रयोजनम् । उदस्थात् । उदस्थाताम् । अटि कृते साङ्कस्य पूर्वसवर्णः प्राप्नोत्युदः स्थास्तम्भोरिति । 'निर्दिश्यमानस्याऽऽदेशा भवन्ती'ति न दोषो भवति ॥ यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ? । अटा व्यवहितत्वात् ॥ सा तर्ह्येषा परिभाषा कर्तव्या ? ॥ न कर्तव्या ।'उक्तं षष्ठी स्थानेयोगेत्येतस्य योगस्य वचने प्रयोजनं—'षष्ठ्यन्तं स्थानेन यथा युज्येत

प्र.] दायस्य ल्यपः प्रसङ्गः। 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहण'मित्येषा तु परिभाषाऽनञ्पूर्वे इति वचनान्नोपतिष्ठते । सामान्यशब्दस्यापि ल्यपः प्रकरणाद्यपेक्षस्य विशेषावसायहेतुत्वं स्यात् । अतिस्य इति । शोभनः स्य इत्युत्तरपदार्थप्रधानस्तत्पुरुषो द्रष्टव्यः । उपसर्जने तु त्यदाद्यत्वाऽभावः।अत्र'पदाङ्गाधिकार'इति वचनात्तदन्तस्य समुदायस्याऽतिशब्दतकारस्यापि'तदोः सः सावनन्त्ययो'रिति सत्वप्रसङ्गः। अत्वं त्वलोऽन्त्यस्येति वचनादन्त्यस्यैव भवतीति तत्र विशेषाऽभावः । परमक इति । अनेकाल्त्वात्सर्वादेशः कः प्राप्नोति । ननु न सत्वविधौ त्यदादीनामिति

उ.]ल्यप्प्राप्तिर्वक्तुमुचितेत्यत आह—कृद्ग्रहणे इति।गत्याद्यसमभिव्याहारे केवलस्य ग्रहणं, तत्समभिव्याहारे तु तद्विशिष्टस्य ग्रहणमिति परिभाषार्थ इति भावः। वचनादिति। तत्प्रवृत्तौ हि नञ्पूर्वे प्राप्त्यभावात्तदनर्थकमिति तस्या अत्राप्रवृत्तिं ज्ञापयतीत्यर्थः। अत एव तत्सूत्रे भाष्ये वक्ष्यति—'प्रत्ययग्रहणे यावद्ग्रहणं तावद्भवितुमर्हती'ति। अत्रेदं ज्ञापकं चिन्त्यम् । गतिकारकसमभिव्याहारे तद्विशिष्टस्य ग्रहणात्तदसमभिव्याहारे नञ्पूर्वे प्राप्त्या तस्य चारितार्थ्यादित्यन्ये । नन्वेवं सर्वत्र यशब्दमात्रश्रवणेऽर्थविशेषावसायो न स्यादत आह—सामान्यशब्दस्यापीति।ननु न सत्वविधाविति।

१ क्वचिन्न । २ लुप्तं स्यात् । ३ इतिः क्वचिन्न। ४ 'कारः'। ५ लुप्तं। द्विपर्यन्तानां त्यदादित्वे इदमावश्यकम् । ६ क्वचिन्न। ७ कृद्ग्रहणेति । ८ 'यावत्सम्भवति'। ९ 'तत्र'।

यतः षष्ठ्युच्चारिते'ति । [ पादः पत् ] ॥

वाह ऊट् ॥ ६।४।१३२ ॥

ऊडादिः कस्मान्न भवति ?। आदिष्टिद्भवतीत्यादिः प्राप्नोति॥ संप्रसारणमित्यनेन यणः स्थानं ह्रियते ॥ यद्येवं–॥*॥ वाह ऊड्वचनानर्थक्यं संप्रसारणेन कृतत्वात् ॥*॥ वाह ऊड्वचनमनर्थकम् ॥ किं कारणम् ? ॥ 'सम्प्रसारणेन कृतत्वात्' । संप्रसारणेनैव सिद्धम् ॥ का रूपसिद्धिः–प्रष्ठौहः पश्य ? ॥ ॥*॥ गुणः प्रत्ययलक्षणत्वात् ॥*॥ प्रत्ययलक्षणेन गुणो भविष्यति ॥*॥

प्र.]स्थानषष्ठी,का तर्हि,तदोरित्येषेति कथं सत्वमतिशब्दतकारस्य परिह्रियते?। एवं तर्हि त्यदादीनां गणसंनिविष्टानां यौ निर्दिश्येते तकारंदकारौ तयोः सत्वविधानादतिप्रसङ्गाऽभावः । [ पादः पत् ] ॥

वाह । ऊडादिरिति । यद्यपि च्छ्वोः शूडित्यत्राऽस्य ठित्त्वं प्रतिपादितं तथाऽपि यथाश्रुतं गृहीत्वा प्रश्नः। संप्रसारणमित्यनेनेति । वाक्यस्य भाविवर्णस्य वा संप्रसारणसंज्ञायां विज्ञायमानायां यणः स्थान ऊड्भवति । अथ यण आदिरूट्कस्मान्न भवति । संप्रसारणप्रदेशान्तरेषु 'यण' इति स्थानषष्ठ्याश्रयणादिहापि स्थानषष्ठ्येव युक्ता। यथोक्तं 'सप्तदशाऽऽदेशाः स्थानेयोगत्वं प्रयोजयन्ती'ति । ठिद्ग्रहणं तु वृद्ध्यर्थम् । यद्येवमिति । प्रष्ठवाह् अस् इति स्थिते वकारस्य संप्रसारणे पूर्वैकादेशे च कृते गुण ओकारो ण्विप्रत्ययाश्रयः । ततो वृद्धिरेचीति वृद्धौ कृतायां

उ.]तकारदकारावेव स्थानिनौ,तद्विशेषणं च त्यदादीनामिति त्यदाद्यन्ते स्थितयोरपि तदोः सत्वप्रसङ्गः परिभाषया न निवारितः, स्थानषष्ठीनिर्दिष्टविषयैव हि सा परिभाषेति शङ्कार्थः । एवं तर्हीति । परिभाषोपस्थानसामर्थ्यान्निर्दिश्यमानत्यदाद्यवयवतदोरेव सत्वमित्यर्थान्न दोष इति भावः । 'निर्दिश्यमानस्ये'त्यस्य निर्दिश्यमानं निर्दिश्यमानावयवं च षष्ठ्यन्तं स्थानेन युज्यते इत्यर्थ इति तात्पर्यम् ।

वाह ऊट् । यथाश्रुतमिति । यथाश्रुताष्टाध्यायीपाठेन टित्त्वेऽपि दोषो नावतरतीति प्रदर्शनायेति भावः । 'संप्रसारणमित्यनेन यणः स्थानं ह्रियते' इति भाष्ये पाठः। ह्रियते–प्राप्यते । 'यणः स्थाने क्रियते' इति पाठस्तु सुगम एव । अथ यण आदिरिति । एवं च संप्रसारणग्रहणानुवृत्तिष्टित्त्वं चोभयमपि सप्रयोजनं भवतीति भावः । यथोक्तमिति । 'तिप्तस्झि' इत्यत्र। तिबादयः सप्तदश लस्येत्यस्य स्थानषष्ठीत्वं प्रतिपादयन्तीति एक इट् तस्यावयवषष्ठीत्वमापादयितुं नालम् , 'त्यजेदेकं कुलस्यार्थे' इति न्यायादेवमिहापीत्यर्थः । किमर्थं तर्हि ठित्त्वमत आह–ठिद्ग्रहणं त्विति । एत्येधत्यूठ्स्विति विशेषणार्थमित्यर्थः । ण्विप्रत्ययेति । 'वहश्चे'ति ण्विः ।

१'ऊठ्'।२'स्थाने क्रियते'।३'पष्ठौहः'।४'रित्येवेति'। ५ 'स्याऽटित्त्वं'। ६'टित्कर'।

एज्ग्रहणे[1] वृद्धिः॥*॥ एज्ग्रहणा[2] वृद्धिर्भविष्यति॥ एवं तर्हि सिद्धे सति यद्वाह ऊठं[3] शास्ति तज्ज्ञापयत्याचार्यो 'भवत्येषा परिभाषाऽसिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण' इति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ पचावेदम् । पचामेदम् । असिद्धत्वाद्बहिरङ्गलक्षणस्यौऽद्गुणस्यान्तरङ्गलक्षणमैत्वं न भवतीति[4]।

श्वयुवमघोनामतद्धिते ॥ ६।४।१३३ ॥

॥*॥ श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम् ॥*॥ श्वादीनां संप्रसारणे[6] नकारान्तग्रहणं कर्तव्यम् ॥ किं प्रयोजनम् ? ॥ 'अनकारान्तप्रतिषेधार्थम्[7]' । अनकारान्तस्य मा भूत् । मघवता मघवते । तथा—'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवती'ति यथेह भवति यूनः पश्येति, एवं युवतीः पश्येत्यत्रापि स्यादिति ॥

यत्तावदुच्यते,—नकारान्तग्रहणं कर्तव्यमिति, न कर्तव्यम् ॥*॥ उक्तं वा ॥*॥ [ उक्तं वा ] ॥ किमुक्तम् ? ॥ उक्तमेतत्—'अर्वणस्तृ मघोनश्च न

प्र.] 'प्रष्ठौह' इत्यादि सिध्यति । अनकारान्ते चोपपदे छन्दसि ण्विर्न दृश्यत इति 'शाल्यूह' इत्यादिसिद्ध्यर्थमप्यूड्विधानं नोपयुज्यते । सत्यपि वा प्रयोगे वह्यर्थे वर्त्तमानस्योहतेः क्विपि 'शाल्यूह' इत्यादि भविष्यति । उपसर्गेऽप्युपपदे वहेर्ण्विश्छन्दसि नास्ति यतो वृद्धेर्बाधकं पररूपं प्रसज्येतेत्यूड्विधानं सार्थकं स्यात् । एवं तर्हीति । संप्रसारणं यजादिप्रत्ययनिमित्तभसंज्ञाश्रयत्वाद्बहिरङ्गमन्तरङ्गे ण्व्याश्रये गुणे कर्तव्येऽसिद्धमिति गुणो न स्यात्तदभावे रूपं न सिध्येदित्यूड्विधानमसिद्धपरिभाषां ज्ञापयति । ननु नैतज्ज्ञापकसाध्यम्, लोकतः सिद्धत्वात् । प्रत्यङ्गवर्त्ती हि लोकः । नैतदस्ति । यत्र युगपदन्तरङ्गबहिरङ्गयोः प्राप्तिस्तत्र लौकिकन्यायाश्रयणाद्भवत्वन्तरङ्गम्, इह तु बहिरङ्गनिमित्तमन्तरङ्गमिति लौकिकन्यायानवतारः ॥

श्वयुव । श्वादीनामिति । 'मघवा बहुल'मिति त्रादेशे कृत एकदेशविकृत-

उ.]छन्दसि ण्विरिति। वस्तुततु 'विभाषा पूर्वाह्ण'तिसूत्रस्थभाष्यप्रामाण्याच्छन्दसीत्यत्र न संबध्यते । तस्मादनभिधानात्तद्विषये ण्विर्नेति वक्तुं युक्तम् । प्रत्यङ्गवर्त्तीति । तथा चाऽचः परस्मिन्नित्यत्र भाष्य उक्तम्—'पुरुषोऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततः सुहृदां ततः संबन्धिना'मिति । इह त्विति । यथा पचावेदमित्यत्रोभयोरेकप्रत्ययनिमित्ताङ्गकार्यत्वाऽभावादङ्गवृत्तपरिभाषाया नात्र विषयः । तस्या अभावाच्च । [ वाह ऊठ् ] ॥

श्वयुव । भाष्ये—नकारान्तग्रहणं कर्त्तव्यम्, उक्तं वेति वार्तिकम् । तत्रोक्तं

१ क्वचिन्न । २ 'ग्रहणाद्वृद्धि' । ३ 'ऊटं' । ४ 'क्षणस्यान्तरङ्ग' । ५ 'भविष्य' । ६ 'प्रसारणे' । ७ क्वचिन्न । ८ लुप्तं स्यात् । ९ इतः पूर्वं 'प्रातिपदिकग्रहणे' इत्यादिना नकारान्तग्रहणस्य फलान्तरमुक्तम् इति पाठः क्वचित् ।

शिष्यं छान्दसं हि त'दिति ॥ यदप्युच्यते—'तथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति यूनः पश्येत्येवं युवतीः पश्येत्यत्रापि स्या'[1]दिति ॥*॥ लिङ्गविशिष्टग्रहणे चोक्तम् ॥*॥ किमुक्तम् ? ॥ 'न वा विभक्तौ लिङ्गविशिष्टाग्रहणा'दिति ॥ अथवोपरिष्टाद्योगविभागः करिष्यते । 'श्वयुवमघोनामतद्धिते' । तंतो[4]'ऽल्लोपः' । अकारस्य च लोपो भवति । ततो-'ऽनः' । 'अन' इत्युभयोः शेपः । [ श्वयुवमघोनामतद्धिते ] ॥

षपूर्वहन्धृतराज्ञामणि ॥६।४।१३५ ॥

अथ[5] किमिदं षपूर्वादीनां पुनर्वचनमल्लोपार्थमाहोस्विन्नियमार्थम् ? ॥ कथं चाल्लोपार्थं[6] स्यात्कथं वा नियमार्थम् ? ॥ यद्यविशेषेणाऽल्लोपटिलोपयोः

प्र.]स्यानन्यत्वान्मघवतेत्यादौ संप्रसारणप्रसङ्गः।अर्वणस्त्रिति। मघवच्छब्दो मतुबन्त इत्यर्थः । न वा विभक्ताविति । यद्यपि विभक्तिमाश्रित्य संप्रसारणं न विधीयते तथाऽपि विभक्तौ विधीयत इति लिङ्गविशिष्टपरिभाषानुपस्थानम् । अन इत्युभयोः शेप इति । समुदायापेक्षणात् । न च त्रादेशे कृतेऽन्नन्तत्वमस्ति । एकदेशविकृतस्यानन्यत्वेनाप्यन्नन्तत्वं नास्ति, सामान्यातिदेशे विशेषानतिदेशात् । युवतिशब्दोऽप्यन्नन्तो न भवतीति तस्यापि संप्रसारणाऽभावः ।[श्वयुवमघोनामतद्धिते]॥

षपूर्व । अथेति । किमिदं विध्यर्थमथ नियमार्थमिति प्रश्नः । यद्यविशेषेणेति । 'प्रकृत्यैका'जित्यादिः प्रकृतिभावः प्राकरणिकविध्यपेक्षो न तु वृद्धिगुणा-

उ.]वेत्यंशमवतारयति—यत्तावदिति । 'प्रातिपदिकग्रहणे' इत्यादिना नकारान्तग्रहणस्य फलान्तरमुक्तम्। छान्दसमिति।अत एव वनिवन्ते संप्रसारणे यस्येति लोपाऽभावः। तत एव तान्ते संप्रसारणाऽभावोऽपीत्यर्थः । युक्त्यन्तरमप्याह—मतुबन्त इति।ततश्च शब्दान्तरत्वात्संप्रसारणाऽभाव इत्यर्थः।तथाऽपि विभक्ताविति भस्य विधानाद्भत्वं च विभक्तौ परत इति यथाकथंचिद्विभक्तौ विधानेऽपि परिभाषानिषेधाङ्गीकारादित्यर्थः । नन्वनन्तरस्येति न्यायादनन्तरस्यैव शेषो न्याय्योऽत आह—समुदायेति । लक्ष्याऽनुरोधादिति भावः । सामान्यातिदेश इति । अन्नन्तत्वं हि मघवञ्छब्दस्य विशेषधर्मः, मघवतेत्यादावभावादिति भावः । यस्य स आदेशस्तत्त्वेन तद्ग्रहणं न्याय्यम् । आदेशश्चायं नस्य, मघवञ्छब्दस्य वा, न त्वनः । छिन्नपुच्छदृष्टान्तमूलको लौकिकन्यायोऽप्यत्र नास्ति, अर्द्धविकारेण प्रत्यभिज्ञानाऽभावादिति तात्पर्यम् । आभीयाऽसिद्धत्वं त्वेतत्सूत्रविषये न, अनित्यत्वात् । अन्यथा 'मघवत' इत्यसिद्धिरिति बोध्यम् ॥ [ श्वयुवमघोनाम ] ॥

१ 'प्राप्नोतीति' । २ भाष्यमिदमित्यन्ये । ३ क्वचिन्न । ४ 'तत' इति क्वचिन्न । ५ 'अथे'ति क्वचिन्न । ६ 'वाऽल्लो' । ७ 'विध्यर्थं स्यात्' । ८ स्यादिति क्वचिन्न ।

सं प्रकृतिभावस्ततोऽल्लोपार्थम् । अथ ह्यणि टिलोपस्यैव सं प्रकृतिभावस्ततो नियमार्थम् ॥ अत उत्तरं पठति ॥*॥ षपूर्वादीनां पुनर्वचनमल्लोपार्थम् ॥*॥ षपूर्वादीनां पुनर्वचनं क्रियते॥[ किं प्रयोजनम् ] ?॥'अल्लोपार्थम्'। अविशेषणाऽल्लोपटिलोपयोः सं प्रकृतिभावः॥*॥ अवधारणे ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्गः॥*॥अवधारणे हि सत्यन्यत्र प्रकृतिभावे उपधालोपः प्रसज्येत ॥ कथम् ? ॥ यदि तावदेवं नियमः स्यात्षपूर्वादीनामेवाणीति, भवेदिह नियमान्न स्यात् ,–सामनः वैमनं इति । ताक्षण्य इति प्राप्नोति : अथाप्येवं नियमः स्यात्षपूर्वादीनामण्येवेति, एवमपि भवेदिह नियमान्न स्यात्–ताक्षण्य इति । सामनः वैमनं इत्यत्र तुं प्राप्नोति ॥ अथाप्युभयतो नियमः स्यात्षपूर्वादीनामेवाण्यण्येव षपूर्वादीनामिति, एवमपि सामन्यः वेमन्यं इति प्राप्नोति । तस्मात्सुष्ठूच्यते–'षपूर्वादीनां पुनर्वचनमल्लोपार्थमवधारणे ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्ग' इति ॥ [ षपूर्वहन्धृत ] ॥

आतो धातोः ॥६।४।१४० ॥

॥*॥ आतोऽनापः ॥*॥ आतोऽनाप इति वक्तव्यम् । इहापि यथा

प्र.]पेक्षः । तत्र प्राकरणिकानि कार्याणि भेदेनापेक्ष्येरन्नभेदेन वेति पक्षद्वयोपपत्तिः। अविशेषेणेति । अल्लोपटिलोपसमुदायमपेक्ष्य प्रकृतिभावो विधीयते । ताक्षण्य इति । तक्ष्णोऽपत्यमिति 'सेनान्तलक्षणे'ति ण्यः । 'ये चाऽभावकर्मणो'रिति प्रकृतभावाट्टिलोपाऽभावः । सामन इति । 'साऽस्य देवते'त्यण् । अत्राऽन्निति प्रकृतिभावाट्टिलोपाऽभावेऽल्लोपप्रसङ्गः । अथापीति । तन्त्रस्याऽऽवृत्तेर्वाऽऽश्रयणात् । सामन्य इति । 'तत्र साधु'रिति यत् । [ षपूर्वहन्धृत ] ॥

उ.] षपूर्व । ननु वृद्धीत्यादि । तेन 'सांराविणं' 'साङ्कौटिन'मित्यादौ गुणवृद्ध्योः 'इन्नन्तस्य विधीयमानप्रकृतिभावेन न निवृत्तिः । एतत्प्रकरणस्थत्वाऽभावादिति भावः । भेदेनेत्यादि । भेदेनाऽपेक्षायामनन्तरस्येति न्यायाट्टिलोपस्यैव प्रकृतिभाव इति पक्षः।तत्राऽऽद्ये नियमार्थं, द्वितीये विध्यर्थम् । अल्लोपटिलोपेति । अत एव 'नैका'जिति नासूत्रीति भावः। ततश्चाऽल्लोपस्यापि प्रकृतिभावादप्राप्तावनेन विधिरिति तात्पर्यम् । भाष्ये–अन्यत्र प्रकृतिभाव इति। एतदतिरिक्ते प्रकृतिभावविषये इत्यर्थः । सेनान्तेति । कारिलक्षणो ण्य इत्यर्थः । कथं पुनरेकेन वाक्येन नियमद्वयलाभोऽत आह–तन्त्रेति । अत्र प्रयोक्तुस्तन्त्रेण प्रयोगः , बोद्धुरावृत्त्या बोधः । वाशब्दश्चार्थ इति बोध्यम् । [ षपूर्वहन्धृतराज्ञामणि ] ॥

१ क्वचिन्न । २ 'विध्यर्थम्' । ३ इदं लुप्तं स्यात् । ४ 'वेमनः' । ५ इति च । ६ इति तु प्रा । ७ 'वैमन्यः'

स्यात्—समासेऽनञ्पूर्वे क्त्वो ल्यबिति ॥ अनाप इति किमर्थम् ? ॥ खट्वायाम् मालायाम् ॥ यद्यनाप इत्युच्यते कथं क्त्वायाम् ?॥*॥ क्त्वायां निपातनात्॥*॥ निपातनादेतत्सिद्धम् ॥ किं निपातनम् ? ॥ 'क्त्वायां वा प्रतिषेध' इति ॥ यद्येवं नार्थोऽनाप इत्यनेन ॥ कथं 'समासेऽनञ्पूर्वे क्त्वो ल्य'बिति ? ॥ निपातनादेतत्सिद्धम् ॥ कथं 'हलः श्नः शानज्झा' विति॥ एतदपि निपातनात्सिद्धम् ॥[*॥योगविभागाद्वा॥*]॥ अथवा योगविभागः करिष्यते । 'आतः' । आकारलोपो भवति । ततो 'धातोः' । धातोश्चाऽऽकारस्य लोपो भवतीति ।

मन्त्रेष्वाङ्यादेरात्मनः ॥ ६।४।१४१ ॥

॥*॥ मन्त्रेष्वात्मनः प्रत्ययमात्रप्रसङ्गः ॥*॥ मन्त्रेष्वात्मनः प्रत्ययमात्रे लोपः प्रसञ्ज्यः । इहापि यथा स्यात्—त्मन्या समञ्जन् । त्मनोरन्तरस्थ

---

प्र.] आतो । समास इति । ननु सौत्रोऽयं निर्देश इति किं तदर्थेन योगविभागेन ?। एवं तर्हि यदा वैयाकरणा अनुकरणशब्दैर्व्यवहरन्ति तदर्थो योगविभागः। ते हि साधुभिर्व्यवहरमाणा अभ्युदयभाजो भवन्ति । क्त्वायामिति । निपातनाल्लोपाऽभावः, याडागमश्च । सामान्यापेक्षं च निपातनं न सप्तम्यपेक्षमिति कृत्वा क्त्वाया इत्यपि भवति । ततो धातोरिति । इदं नित्यार्थं सत्पूर्वेण विकल्पं ज्ञापयति । सा च व्यवस्थितविभाषेति, आबन्तस्याऽऽल्लोपाभावोऽन्यस्य यथा प्रयोगं विकल्पः । केचित्स्त्रीलिङ्गपुंल्लिङ्गाश्रयं क्त्वायाः क्त्व इत्यादि रूपद्वयं व्याचक्षते ।

मन्त्रे । आङिति पूर्वाचार्यप्रक्रियया तृतीयैकवचनग्रहणादव्याप्तिं मत्वाऽऽह—मन्त्रेष्विति। त्मन्येति। सप्तम्येकवचनस्य स्थाने 'या'शब्द आदेशः। छान्दसत्वा-

---

उ.] आतो धातोः । वैयाकरणा इति । सूत्रकारादिभ्योऽन्य इत्यर्थः । साधुभिरिति । शास्त्रानुगमेनैव हि साधुत्वमिति भावः । अत्रानाप इति वार्तिकारोक्तेस्तस्य च क्त्वो ल्यविति सौत्रप्रयोग एव च भगवतोदाहरणदानात् , तदनुकरण एव च कैयटेनोदाहरणदानादाकारान्तधातुप्रकृतिकातिरिक्ताकारान्तप्रातिपदिकाऽभाव इति लभ्यते। धातुग्रहणव्यावर्त्यं त्वाबन्ता एवेति वोध्यम्। याडागमश्चेति। सोऽपि 'याडाप' इति वचनान्न प्राप्नोतीति भावः । नन्वात इत्यनेनैव सिद्धे धातोरिति व्यर्थमत आह—नित्यार्थं सदिति । इदं पूर्वस्य क्वाचित्कत्वं ज्ञापयतीति वक्तुं युक्तम् । यथाप्रयोगमिति । आबन्तकृतिक्वाचारक्विबन्तप्रकृतिककर्तृक्विबन्ता न सन्त्येव, अनभिधानादिति भावः । विकल्प इति । क्त्वाश्वाविषयमेतत् । स्त्रीलिङ्गेति । क्त्वायां श्रुताविति स्त्रीलिङ्गस्य विशेष्यत्वेऽजादित्वाट्टाविति भावः ।

मन्त्रेष्वाङ्यादेः । ननु च्छान्दसत्वेऽपि लक्षणाऽभावे कथं साधुत्वमत आह—

---

१'किम्'।२इदंप्रायो लुप्तं।'नादिति'।३इदमेव वार्त्तिकमित्यन्ये।४'च'।५इतिः क्वचिन्न।

इति ॥ यदि प्रत्ययमात्रे लोप उच्यते कथमात्मन एव निर्मिमीष्वेति ॥ तस्मान्नार्थः प्रत्ययमात्रे लोपेन ॥ कथं त्मन्या समञ्जन् . त्मनोरन्तरस्य इति ? ॥*॥ छान्दसत्वात्सिद्धम् ॥*॥ छान्दसमेतत् । दृष्टानुविधिश्छन्दसि भवति ॥*॥ आदिग्रहणानर्थक्यं चाऽऽकारप्रकरणात् ॥*॥ आदिग्रहणं चानर्थकम् ॥ किं कारणम् ? ॥ 'आकारप्रकरणात्' । आत इति वर्तते ॥

## ति विंशतेर्डिति ॥ ६।४।१४२ ॥

तिग्रहणं किमर्थं न विंशतेर्डिति लोप इत्येवोच्येत? ॥ नैवं शक्यम् । विंशतेर्डिति लोप इतीयत्युच्यमानेऽन्त्यस्य प्रसज्येत। सिद्धोऽन्त्यस्य यस्येति लोपेनैव, तत्राऽऽरम्भसामर्थ्यात्तिशब्दस्य भविष्यति ॥ कुतो नु खल्वेतदनन्त्यार्थे आरम्भे तिशब्दस्य भविष्यति न पुनरङ्गस्येति ?। तस्मात्तिग्रहणं कर्तव्यम् ॥

अथ क्रियमाणेऽपि तिग्रहणेऽन्त्यस्य कस्मान्न भवति? ॥ निर्दिश्यमानस्याऽऽदेशा भवन्तीत्येवं न भविष्यति । [ ति विंशतेर्डिति ] ॥

## टेः ॥६।४।१४३ ॥

॥*॥ अमस्योपसङ्ख्यानम् ॥*॥ अमस्योपसङ्ख्यानं कर्तव्यम् । इहापि

---

प्र ]दिति । यथा 'शिवा उद्रस्ये'ति, 'रुद्रस्ये'ति प्राप्ते रेफलोपः, एवमिहाऽऽकारलोपः । एवं च ब्रुवता सूत्रमेव प्रत्याख्यातम् । सति त्वारम्भे नार्थ आदिग्रहणेन । 'आतो धातो'रित्यत आत इत्यनुवर्त्तनात् । [मन्त्रेष्वाड्यादे] ॥

ति विंश।कुतो नु खल्विति।वचनसामर्थ्यादलोऽन्त्यपरिभाषाया अनुपस्थानात्समुदायस्यैव षष्ठीनिर्देशाल्लोपः प्रसज्येत न त्वसंशब्दितस्य तिशब्दस्य । तिग्रहणे तु सति तेर्लोपो भवति। निर्दिश्यमानस्याऽऽदेशा भवन्तीति। नानेन परिभाषाया व्यापारः कथ्यते । नहि निर्दिश्यमानपरिभाषा अलोऽन्त्यस्याऽऽदेः परस्येत्येतयोर्बाधिका, एतयोर्निर्विषयत्वप्रसङ्गात् । तस्मात्तिग्रहणसामर्थ्यादलोऽन्त्यस्येत्यस्यानुपस्थाने सर्वस्य तेर्लोपो भवतीत्ययमस्य भाष्यस्यार्थः । [तिविंशतेर्डिति] ॥

---

उ.]यथेति । उद्रस्येत्यादिवदस्यापि साधुत्वमिति भावः। [मन्त्रेष्वाड्यादेरात्मनः]॥

ति विंशतेः । न त्वसंशब्दितस्येति । शब्देन साक्षादनिर्दिष्टस्येत्यर्थः । भाष्ये–निर्दिश्यमानस्येति । 'द्वयोर्दशतोर्विंन् आदेशः, शतिश्च प्रत्यय' इति पक्षेऽनर्थकत्वादलोऽन्त्यस्येत्यस्याऽप्राप्तावनया परिभाषया सर्वस्येत्यर्थः । अव्युत्पन्नप्रातिपदिकपक्षेऽप्यनर्थकत्वमेव । व्युत्पन्नत्वपक्षेऽपि शुद्धरूढत्वादनर्थकत्वमेवेत्यन्ये । [ ति विंशतेर्डिति ] ॥

---

१ अयं पाठः क्वचिन्न । २ इदं भाष्यमित्यन्ये । ३ चः क्वचिन्न । ४ एवमिति क्वचिन्न । ५ प्रायो लुप्तम् ।

यथा स्यात् ,–उपसरजः मन्दुरज इति ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् ॥ कथमुपसरजः मन्दुरज इति ? ॥*॥ डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् ॥*॥ डित्यभस्याप्यनुबन्धकरणसामर्थ्याद्भविष्यति ॥ [ टेः ] ॥

नस्तद्धिते ॥ ६।४।१४४ ॥

॥*॥ नकारान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसङ्ख्यानम् ॥*॥ नकारान्तस्य टिलोपे सब्रह्मचारिन् पीठसर्पिन् कलापिन् कुथुमिन् तैतिलिन् जाजलिन् लाङ्गलिन् शिलालिन् शिखण्डिन् सूकरसद्मन् सुपर्वन्नित्येषामुपसङ्ख्यानं कर्तव्यम् । सब्रह्मचारिन्–सब्रह्मचारिणे इमे–साब्रह्मचाराः । सब्रह्मचारिन् ॥ पीठसर्पिन्–पैठसर्पाः । पीठसर्पिन् ॥ कलापिन्–कालापाः । कलापिन् ॥ कुथुमिन्–कौथुमाः। कुथुमिन्॥ तैतिलिन्–तैतिलाः। तैतिलिन् ॥ जाजलिन्–जाजलाः । जाजलिन् ॥ लाङ्गलिन्–लाङ्गलाः । लाङ्गलिन् ॥ शिलालिन्–शैलालाः। शिलालिन् । शिखण्डिन्–शैखण्डाः । शिखण्डिन् ॥ सूकरसद्मन्–सौकरसद्माः । सूकरसद्मन्॥ सुपर्वन्–सौपर्वाः। सुपर्वन्॥*॥चर्मणः कोशे[उपसङ्ख्यानम्॥*]॥ चर्मणः कोश उपसङ्ख्यानं कर्तव्यम् । चार्मः कोशः ॥*॥ अश्मनो विकार

प्र.] टेः । डित्यभस्यापीति । चुटू इति वचनादित्संज्ञा तावड्डुकारस्य प्रवर्तते, दीर्घकाशतुषभ्राष्ट्रवटं जे इति निर्देशात् । ततश्चानुबन्धकरणसामर्थ्याद्धस्येति प्रकरणमिह बाध्यते । [टेः] ॥

नस्त।नकारान्तस्येति 'इनण्यनपत्ये'इति 'अ'न्निति च प्रकृतिभावे प्राप्ते वचनम् । 'सब्रह्मचारिण इमे'इति तस्येदमित्यण्।पीठेन सर्पतीति–पीठसर्पी।पूर्ववदण्। कलापिना प्रोक्तमधीयते कालापाः । कलापिनोऽणित्यण् । ततोऽध्येतृवेदित्रोरणः प्रोक्ताल्लुगिति लुक्। कुथुमिना प्रोक्तमधीयते कौथुमाः । तेन प्रोक्तमित्यण् , पूर्ववत् द्वितीयस्याणो लुक् । तैतिलिजाजलिलाङ्गलिप्रोक्तमध्ययनं साहचर्यात्तैतिल्यादिशब्दैरुच्यते । तेभ्यस्तदधीते तद्वेदेत्यणप्रत्ययः। तेन प्रोक्तमित्यत्र तु शैषिकेऽर्थे वृद्धाच्छ इति च्छः प्रसज्येत। केचित्तु तितिलिशब्दमत्राधीयते। चार्म इति। 'तस्य विकार'

उ.] टेः । ननु श्रवणार्थो डकारः स्यादत आह–चुटू इतीति । इत्संज्ञाशास्त्रबाधे मानाऽभावेनाऽनुपजातविरोधन्यायेन पूर्वमित्त्वं प्रवर्त्तत इति भावः । अत्रैवार्थे लिङ्गमप्याह–दीर्घकाशेति । बाध्यत इति । लिङ्गेन प्रकरणबाधस्यौचित्यादिति भावः । अत्रापि पूर्वोक्तं लिङ्गं बोध्यम् । [ टेः ] ॥

नस्तद्धिते । ततोऽध्येत्रिति । 'छन्दोब्राह्मणानी'ति तद्विषयता । ननु प्रोक्ताऽणा सिद्धे किमुपचाराश्रयणेनेत्यत आह–तेन प्रोक्तमित्यत्र त्विति । इत्येतस्मि-

१ क्वचिन्न । २ 'नान्तस्य' । ३ 'सूकरसद्म' । ४ क्वचिन्न । ५ लभ्यं स्यात् ।

उपसङ्ख्यानम् ॥*॥अश्मनो विकार उपसङ्ख्यानं कर्तव्यम् । अश्मनो विकार आश्मः॥*॥शुनः सङ्कोचे ॥*॥शौवः संकोचः॥*॥अव्ययानां च [सायम्प्रातिकाद्यर्थम् ]॥*॥अव्ययानाञ्चोपसङ्ख्यानं कर्त्तव्यम्॥ किं प्रयोजनम्?॥*॥ सायंप्रातिकाद्यर्थम्॥*॥सायंप्रातिकः पौनःपुनिकः । ॥*॥शाश्वतिके प्रतिषेधः॥*॥ शाश्वतिके प्रतिषेधो वक्तव्यः । न वक्तव्यः ॥[*॥ निपातनात्सिद्धम् ॥*]॥ निपातनादेतत्सिद्धम्॥किं निपातनम्?॥येषां च विरोधः शाश्वतिक इति॥ एवं तर्हि [॥*॥ शाश्वते प्रतिषेधः ॥*]॥ शाश्वते प्रतिषेधो वक्तव्यः । शाश्वतम् ।

यस्येति च ॥६।४।१४८॥

प्र.]इत्यण् । शौव इति । तस्येदमित्यण् । 'स्वे ग्रामजनपदमनुष्येभ्य' इत्येतत्तु प्रत्याख्यातम् । अत्र परत्वाद्वृद्धौ प्राप्तायां 'द्वारादीनां चे'ति तत्प्रतिषेध ऐजागमे च कृते टिलोपः क्रियते । सङ्कोचादन्यत्र 'शौवन' इति । विकारावयवयोस्तु प्राण्यञि प्रकृतिभावाऽभावाच्छौव इत्येव भवति । सायंप्रातिक इति । सायंप्रातःशब्दाद्द्वन्द्वात्कालाट्ठञिति ठञ्प्रत्ययः । यथाकथंचित्कालशब्दादपि ठञ् भवतीति कालसमुदायवाचिनोऽपि ठञ् भवति । पौनःपुनिक इति । पूर्ववट्ठञ् । आदिशब्दः प्रकारे । टिलोपदर्शनेन च सादृश्यमाश्रीयत इत्यारातीयः शाश्वतिक इत्यत्र च टिलोपाऽभावः । निपातनादिति । अत एव निपातनात्तान्तादिति कादेशाऽभावः । शाश्वतमिति । भाष्यकारवचनप्रामाण्यादण्प्रत्ययः ॥ [नस्तद्धिते] ॥

यस्येति च । सवर्णदीर्घत्वे लोपे वा नास्ति विशेष इति मत्वा पृच्छति—

उ.]ञ्छैषिकेऽर्थे त्वित्यर्थः। अत्र तैतिलित्वेनैवाध्ययनबोध इति बोध्यम्।चार्म इति। कोशोऽत्र शस्त्रादिस्थापनार्थश्चर्ममयो भाषायां 'म्यान' इति प्रसिद्धः । ननु तस्येदमित्यत्र 'स्वे ग्रामे'त्यादिपरिगणनाच्छ्वन्शब्दात्संकोचेऽण् दुर्लभोऽत आह–स्वे ग्रामेत्यादि । स्वेऽर्थे एव, ग्रामादिवाचकेभ्य एव चेति द्विविधो नियमस्तदर्थ इति भावः । नन्वत्र टिलोपे वृद्धिविषयाऽभावेन तन्निषेधसंनियोगशिष्ट ऐज्न स्यादत आह–अत्र परत्वादिति । सङ्कोचादन्यत्र सर्वत्र शौवन इत्येवेति न बोद्धव्यमित्याह–विकारेत्यादि । इदं तु वचनमणि प्रकृतिभावे प्राप्ते सङ्कोचे टिलोपविध्यर्थमिति भावः । ननु कालसमुदायवाचकस्य कथं कालवाचकत्वमत आह–यथाकथंचिदिति । सायंप्रातिकादिगणपाठाऽभावादादिशब्दार्थमाह–आदिशब्द इति । ठञा बाधादण् दुर्लभोऽत आह–भाष्यकारेति । तत्प्रामाण्यात्सन्धिवेलादिगणे 'शश्वतो वे'ति पाठानुमानमिति भावः । [ नस्तद्धिते ] ॥

१ क्वचिन्न । २ अव्ययानां च सायम्प्रातिकाद्यर्थमुपसङ्ख्यानं कर्त्तव्यम् । ३ इदं वार्त्तिकं पूर्ववार्त्तिकेन सहैव क्वचित्पठ्यते । ४ लभ्यं स्यात् । ५ भाष्यवार्त्तिकमिदमिति कैयटादयः ।

इवर्णस्य ईत्त्वे किमुदाहरणम्?॥ हे दाक्षि दाक्ष्या दाक्षेयः॥ हे दाक्षीति,–यदि लोपो न स्यात्परस्य ह्रस्वत्वे कृते सवर्णदीर्घत्वं प्रसज्येत ॥ दाक्ष्येति,–यदि लोपो न स्यात्परस्य यणादेशे कृते पूर्वस्य श्रवणं प्रसज्येत ॥ दाक्षेय इति,–यदि लोपो न स्यात्परस्य लोपे कृते पूर्वस्य श्रवणं प्रसज्येत ॥ नैतानि सन्ति प्रयोजनानि, सवर्णदीर्घत्वेनाप्येतानि सिद्धानि ॥ इदं तर्हि अतिसखेरागच्छति, अतिसखेः स्वम्। यदि लोपो न स्यादुपसर्जनह्रस्वत्वे कृतेऽसखीति प्रतिषेधः प्रसज्येत ॥*॥ यस्येत्यादौ श्यां प्रतिषेधः ॥*॥ यस्येत्यादौ श्यां

प्र.]इवर्णस्येति। हे दाक्षीति । दाक्षिशब्दादितो मनुष्यजातेरिति ङीषि कृते तस्य संबुद्धौ ह्रस्वे कृते सवर्णदीर्घत्वे सति सवर्णदीर्घस्य श्रवणप्रसङ्गः । ननु चान्तरङ्गत्वात्सवर्णदीर्घत्वे कृते ह्रस्वो भविष्यति । एवं तर्हि 'वार्णादाङ्गं बलीय' इति ह्रस्वत्वं मन्यते । 'दाक्षि ई आ' इति स्थिते शब्दपरविप्रतिषेधात्परस्य यणादेशे कृते पूर्वस्य श्रवणप्रसङ्गः । सवर्णदीर्घस्याऽपूर्वविधित्वात्तत्र कर्त्तव्ये परयणादेशस्य नास्ति स्थानिवत्त्वम् । यणादेशेऽपि कर्त्तव्ये 'वर ई' इतीकारप्रश्लेषादीविधिं प्रति स्थानिवत्त्वप्रतिषेधः । 'दाक्षि ई' इति स्थिते 'स्त्रीभ्यो ढ'गिति ढकि कृते परस्य लोपे कृते पूर्वस्य श्रवणप्रसङ्गः । परलोपस्य स्थानिवद्भावात्तद्धितनिमित्तस्य लोपस्याऽप्रसङ्गात् । नैतानीति । यत्राऽऽङ्गवार्णयोर्युगपत्प्रसङ्गस्तत्र वार्णादाङ्गं बलीयो भवतीति भावः । यण्ढकौ त्वाङ्गावेव न भवतः । इदं तर्हीति । सखिशब्दा-

उ.] यस्येति च । ह्रस्वे कृत इति । दाक्षि–ई सु–इति स्थिते शब्दपरविप्रतिषेधेन दीर्घात्पूर्वं ह्रस्वत्वं, ततो दीर्घ इत्याशय इति भावः ।ननु चान्तरङ्गेति । अग्रे भाष्य एवास्य वक्ष्यमाणत्वात्तदज्ञानेनैवास्य ग्रन्थस्य प्रवृत्तेः शङ्केयं निर्दला । ननु यणादेशस्य स्थानिवत्त्वात्सवर्णदीर्घे कथं पूर्वस्य श्रवणप्रसङ्गोऽत आह–अपूर्वविधित्वादिति । किंतु पूर्वपराश्रय इति भावः । ननु पूर्वस्य यणि कार्ये स्थानिवत्त्वप्रवृत्त्या रूपं सिद्धमत आह–यणादेशेऽपीति। वर ई इति । इदमप्यत्रत्यपूर्वपक्षभाष्याशयवर्णनमात्रं, नत्वयं सिद्धान्तः, फलाऽभावात् । पद्ध्या अपत्यं पाद्धेय इत्याद्यसिद्ध्यापत्तेश्च । पद्ध्या मृद्ध्येत्यस्य मूर्धाभिषिक्तोदाहरणपराऽचः परस्मिन्निति सूत्रस्थभाष्यविरोधापत्तेश्चेति निरूपितमन्यत्र । यत्राऽङ्गेति । 'अन्तरङ्गं बलीय' इत्येतदपवादत्वादस्येति भावः।यद्यपि 'हे दाक्षी'त्यत्र पदस्य विभज्यान्वाख्यानेऽस्ति युगपत्प्रसङ्गस्तथाऽपि क्रमेणान्वाख्यान इदं सिध्यतीति तात्पर्यम् । यण्ढकौ त्विति। अत्र ढग्ग्रहणं प्रत्ययमात्रोपलक्षणमित्याहुः । ननु लिङ्गविशिष्टपरिभाषया राजाहःसखिभ्यष्ट इति टज्दुर्वारोऽत आह–लिङ्गविशिष्टेति । पूर्वान्तवद्भावेन प्राप्तस्य समा-

१ 'इवर्णान्तस्य इति' । २ क्वाचित्कम् । ३ 'प्रसङ्गो दोषोऽत' । ४'भ्यष्टज्' ।

प्रतिषेधो वक्तव्यः । काण्डे कुड्ये । सौर्यें नामे हिमवतः शृङ्गे ॥ स तर्हि प्रतिषेधो वक्तव्यः ? ॥ न वक्तव्यः । इह स्यामित्यपि प्रकृतं, नेत्यपि, तत्राभिसम्बन्धमात्रं कर्तव्यम् ,–'यस्येत्यादौ लोपो भवति, श्यां न'॥*॥ इयङुवङ्भ्यां लोपो विप्रतिषेधेन ॥*॥ इयङुवङ्भ्यां लोपो भवति विप्रतिषेधेन।

प्र.]संख्यशिश्वीति भाषायामिति ङीपि कृते सखीमतिक्रान्त इति प्रादिसमासे कृते लिङ्गविशिष्टपरिभाषाया अनित्यत्वादसति टचि गोस्त्रियोरिति ह्रस्वः । तत्राऽसति-इकारलोप एकादेशस्य पूर्वं प्रत्यन्तवद्भावाद्घिसंज्ञाप्रतिषेधः स्यात् । प्रसज्यप्रतिषेधे चाऽयं दोषो नतु पर्युदासे,तदन्तस्य सखिशब्दादन्यत्वाद्घिसंज्ञायाः सिद्धत्वात्।ङीपि तु लोपे कृते ह्रस्वत्वे च कृते लाक्षणिकत्वात्सखिरूपस्य घिसंज्ञायाः प्रतिषेधाऽभावः। काण्डे इति । 'यचि भ'मिति भत्वाल्लोपः प्राप्नोति । सौर्ये इति । सूर्येण एकदिगित्यण् । तत्र 'यस्येति चे'त्यकारलोपः प्राप्नोति, 'सूर्यतिष्ये'ति यलोपश्च। यथा तु वक्ष्यते 'सूर्यमत्स्ययोर्ङ्या'मिति तथाऽत्र यलोपस्याऽप्रसङ्गः । इह श्यामिति। 'विभाषा ङिश्यो'रित्यतः शीग्रहणं, 'न संयोगाद्वमन्ते'त्यतो नेति चानुवर्तते।

उ.]सान्तविधेरनित्यत्वादभाव इति वाध्यम्। पूर्वं प्रतीति । प्रतिषेधे पूर्वस्याऽऽश्रयणादन्तवद्भावप्राप्तेरिति भावः । प्रसज्येति । वस्तुतः पर्युदासेऽपि दोषः । वर्णसंज्ञापक्षे लक्षणाया आवश्यकत्वेन सख्यंश एव लक्षणाङ्गीकारे सख्यवयवभिन्नवर्णस्येत्यर्थात् । तदन्तसंज्ञापक्षेऽप्यनुभूतविशेषणवर्णेनैव तदन्तविधिस्वीकारेण सख्यवयवभिन्नवर्णान्तस्येत्यर्थात् । अतिदेशे चातिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याऽभावस्य लोकव्युत्पत्तिसिद्धतया न स्वाश्रयसख्यवयवभिन्नत्वमादाय दोषः।पर्युदासे प्रसज्यप्रतिषेधस्याऽपि[3] गम्यमानतया पूर्वान्तवत्त्वेन सखिशब्दत्वे समुदाय आगत इवर्णे सख्यवयवत्वमार्थसमाजग्रस्तमेव । किञ्च तव प्रसज्यप्रतिषेधेऽपि न दोषः । अतिसखीति समुदायनिष्ठघिसंज्ञायास्तेन वारयितुमशक्यत्वात्[4]। संज्ञाविधौ तदन्तग्रहणे मानाभावादिति दिक् । न च लोपेऽपि लिङ्गविशिष्टपरिभाषया दोषः, तस्या अनित्यताया उक्तत्वात् । कार्यकालपक्षे विभक्तौ लिङ्गविशिष्टाऽग्रहणाच्च । ख्यत्यात्सूत्रस्थभाष्यं तु तत्सूत्र एव योजितम् । एवं च सखायमतिक्रान्तोऽतिसखेत्यादौ घित्वं न भवत्येवेति भाष्यस्वरसः । भत्वादिति । 'अनपुंसकस्ये'ति सर्वनामस्थानत्वप्रतिषेधादित्यर्थः । अकारलोप इति । अणकारलोप इत्यर्थः । यलोपश्चेति । एवं चोभयोरपि निषेधो वक्तव्य इत्यर्थः । तत्र यलोपप्रतिषेधवचनं न कार्यमित्याह–यथा त्विति। भाष्ये–लोपावकाशः कामण्डलेय इति । अयं 'ढे लोप' इत्यस्याऽवकाशः। यस्येति लोपस्याऽवकाशस्त्वतिसखेरित्युक्त एवेति बोध्यम्।



१ क्वचिन्न । २ 'पर्युदासे प्रतिषेधस्यापि' । ३ 'गम्यतया' । ४ 'त्वाच्च' ।

इयङुवङोरवकाशः—श्रियौ श्रियः । भ्रुवौ भ्रुवः । लोपस्यावकाशः—कामण्डलेयः भाद्रवाहेयः[1] । इहोभयं प्राप्नोति—वात्सप्रेयः लैखाभ्रेयः[2] । लोपो भवति विप्रतिषेधेन ॥*॥ गुणवृद्धी[3] च ॥*॥ गुणवृद्धी चेयङुवङ्भ्यां भवतो विप्रतिषेधेन। गुणवृद्ध्योरवकाशः—चेता गौः। इयङुवङोः स एव । इहोभयं प्राप्नोति—चयनम् चायकः । लवनम्[3] लावकः[3] । गुणवृद्धी भवतो विप्रतिषेधेन ॥*॥ न वेयङुवङादेशस्याऽन्यविषयवचनात् ॥*॥ न वाऽर्थो[5] विप्रतिषेधेन ॥ किं कारणम्[5] ? ॥ 'इयङुवङादेशस्यान्यविषयवचनात्'[4] । इयङुवङादेशोऽन्यविषये आरभ्यते ॥ किंविषये ? ॥ यणादेशविषये । स यथैव यणादेशं बाधत एवं गुणवृद्धी अपि बाधेत ॥*॥ तस्मात्तत्र[6] गुणवृद्धिविषये प्रतिषेधः ॥*॥ तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधो वक्तव्यः । न[6] वक्तव्यः[6] । मध्येऽपवादाः पूर्वान्विधीन्बाधन्त इत्येवमियङुवङादेशो यणादेशं बाधिष्यते गुणवृद्धी न बाधिष्यते ॥ [ यस्येति च ] ॥

## सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥ ६।४।१४९ ॥

॥*॥ सूर्यादीनामणन्तेऽप्रसिद्धिरङ्गान्यत्वात् ॥*॥ सूर्यादीनामणन्तेऽप्रसिद्धिः । सौरी वलाका ॥ किं कारणम् ? ॥ 'अङ्गान्यत्वात्' । अणन्तमेतदङ्गमन्यदङ्गं[7] भवति ॥ लोपे कृते नाङ्गान्यत्वम् ॥ स्थानिवद्भावादङ्गान्यत्वं भवति॥

---

प्र.]तेन वाक्यभेदेन द्वयोः कार्यं निषिध्यते । कामण्डलेय इति । 'चतुष्पाद्भ्यो ढञ्' इति ढञ् । एवं वात्सप्रेय इति । लैखाभ्रेय इति । 'शुभ्रादिभ्यश्चे'ति ढक् । इयङुवङादेश इति । आदेशनमादेशः—विधानम् । इयङुवङोरादेश इति षष्ठीसमासः।यथेयङुवङौ सर्वत्रान्यपूर्वकौ नैवं गुणवृद्धी इति विप्रतिषेधानुपपत्तिरित्यर्थः।

सूर्य । सौरीति । तेनैकदिगित्यण् । तदन्तान्ङीप् । ईकारे परतोऽत्र सूर्यशब्दोऽङ्गं न भवति किं तर्ह्यणन्तमिति यकारलोपाऽप्रसङ्गः । पुंयोगविवक्षायां तु देवतायां चाण्विधानादन्यत्र ङीषि[8] कृते सूर्यशब्दोऽङ्गमीकारे भवतीति तत्रैव लोपः

---

उ.]वात्सप्रेय इति। वत्सं प्रीणातीति वत्सप्रीः । लैखाभ्रेये 'ढे लोपोऽकद्र्वाः' इत्युलोपः । नन्वियङुवङादेशाविति वाच्य एकवचननिर्देशोऽयुक्तोऽत आह—आदेशनमिति । नैवं गुणेत्यादि । चेता गौरित्यादौ सावकाशत्वादिति भावः ॥

सूर्यतिष्यागस्त्य । अङ्गं न भवतीति । सूर्यादीनामङ्गानां भसंज्ञकानामीति-उपधालोप इति सूत्रार्थादिति भावः । नन्वेवं सूर्यांशे निरवकाशो लोपोऽत आह—पुंयोगेति । अन्यत्र—कुन्त्यादौ । भाष्ये—स्थानिवद्भावादङ्गान्यत्वमिति । अल्लोप-

---

१ 'माद्रवाहेयः' । २ 'लेखाभ्रेयः' । ३ क्वचिन्न । ४ 'विषये वचनात्' । ५ 'नवा (भवितव्यं) विप्रतिषेधेन' । ६ क्वचिन्न । ७ 'अन्यवद्भ' । ८ 'ङीपि' ।

॥*॥ सिद्धं तु स्थानिवत्प्रतिषेधात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ 'स्थानिवत्प्रतिषेधात्'। प्रतिषिध्यतेऽत्र स्थानिवद्भावो 'यलोपविधिं प्रति न स्थानिवद्भवती'ति ॥ एवमपि न सिध्यति ॥ किं कारणम् ? ॥ 'शब्दान्यत्वात्'। अन्यो हि सूर्यशब्दोऽन्यः सौर्यशब्दः ॥ नैष दोषः ॥ 'एकदेशविकृतमनन्यवद्भवती'त्येवं भविष्यति ॥*॥ उपधाग्रहणानर्थक्यं च ॥*॥ स्थानिवद्भावे चेदानीं प्रतिषिद्ध उपधाग्रहणमनर्थकम् ? ॥ किं कारणम् ? ॥ अन्त्य एव हि सूर्यादीनां यकारः ॥ किं यातमेतद्भवति ? ॥ सुष्ठु च यातं साधु च यातं यदि प्राग्भादसिद्धत्वम् ॥ अथ हि सह तेनाऽसिद्धत्वमसिद्धत्वाल्लोपस्य नान्त्यो यकारो भवति ॥ यद्यपि सह तेनासिद्धत्वमेवमपि न दोषः। नैवं विज्ञायते सूर्यादीनामङ्गानां यकारलोप इति ॥ कथं तर्हि ?॥ 'अङ्गस्य यलोपो भवति स चेत्सूर्यादीनां यकार' इति ॥ एवमपि सूर्यचरी अत्र प्राप्नोति।

प्र.]स्यात्–सूरीति। अङ्गान्यत्वादिति। राजदन्तादित्वात्परनिपातः। यलोपविधिमिति। 'उपधाविधिं प्रति ने'ति तु प्रतिषेधः प्रत्ययविधावेव। स्थानिवत्त्वनिषेधे चावशिष्टस्याङ्गसंज्ञायामेकदेशविकृतस्यानन्यत्वाद्यलोपः सिध्यति। अन्त्य एवेति। अकारद्वयलोपे सति यकारस्यान्त्यत्वात्, तत्र यान्तानां सूर्यादीनां लोपो भवतीत्युच्यमानेऽलोऽन्त्यस्येति यकारस्यैव भविष्यति। यग्रहणं तु न प्रत्याख्यायते, तदन्तरेण यान्तत्वाऽभावात्।उत्तरार्थत्वाच्च यग्रहणस्य। यातमिति। गतं। ज्ञातं सिद्धमित्यर्थः। साधु च यातमिति। अनेन सिद्धेर्दार्ढ्यं प्रतिपाद्यते। यदि प्रागिति। अकारद्वयलोपस्य सिद्धत्वादन्त्यो यकारो भवति। अथेति। ईत्यकारलोपस्य समानाश्रयस्याऽसिद्धत्वाद्यान्तत्वाऽभावः। ततश्चोपधाग्रहणं कर्तव्यम्। यद्यपीति। नचोपधाग्रहणं क्रियते नापि सूर्यादीन्यङ्गत्वेन विशेष्यन्त इत्यर्थः। 'इति तद्धिते च यदङ्गमनाश्रितरूपविशेषं तस्य यकारस्य लोपः, स चेद्यकारः सूर्याद्यवयवो भवती'ति सूत्रार्थः। सूर्यचरीति। सूर्यस्य स्त्री सूरी। सा भूतपूर्वेति चरट्प्रत्ययः।

उ.] स्याच्चः परस्मिन्निति स्थानिवत्त्वादङ्गभेद इत्यर्थः। प्रत्ययविधावेवेति। अतोऽत्र स नोक्त इति भावः। तत्र यान्तानामिति। य इत्यनेन सूर्यादयो विशेष्यन्ते। य इति च बहुवचनस्थाने सौत्रमेकवचनमिति भावः। तदन्तरेणेति। विशेषणाऽभावे यान्तानां सूर्यादीनामित्यर्थाऽसंभवादिति भावः। ननु तदभावेऽपि सूर्यादीनां तद्धिते लोप इत्येव यान्ते प्राप्तिः पर्यवस्यतीत्यरुचेराह–उत्तरार्थत्वाच्चेति। हलस्तद्धितस्याऽऽपत्यस्य चेत्यादौ। नन्वकारद्वयलोपे यान्तत्वमस्त्येवेत्यत आह–ईत्य-

१ क्वचिन्न। २ 'अङ्गान्यत्वात्'। ३ 'तीति भवि'। ४ 'सुयातं'। ५ 'सिद्धं यदि'। ६ 'अनन्त्यो'। ७ 'किं तर्हि'। ८ 'इत्यत्र'।

तस्माद्धुपधाग्रहणं कर्तव्यम् ॥*॥ विषयपरिगणनं च ॥*॥ विषयपरिगणनं च कर्तव्यम् ॥*॥ सूर्यमत्स्ययोर्ङ्याम् ॥*॥ सूर्यमत्स्ययोर्ङ्यामिति वक्तव्यम् । सौरी मत्सी ॥*॥ सूर्यागस्त्ययोश्छे च ॥*॥ सूर्यागस्त्ययोश्छे च ङ्यां चेति वक्तव्यम् । सौरी सौरीयः । आगस्ती आगस्तीयः ॥*॥ तिष्यपुष्ययोर्नक्षत्रेऽणि ॥*॥ तिष्यपुष्ययोर्नक्षत्राऽणि यलोपो वक्तव्यः । तैषम् पौषः ॥*॥ अन्तिकस्य तसि कादिलोप आद्युदात्तत्वं च ॥*॥ अन्तिकस्य तसि कादिलोपो वक्तव्य आद्युदात्तत्वं च वक्तव्यम् । अन्तितो न दूरात् ॥*॥ तमे तादेश्च ॥*॥ तमे तादेश्च कादेश्च लोपो वक्तव्यः । अग्ने त्वं नो अन्तमः । अन्तितमोऽवरोहति ॥*॥ तसीत्येष न वक्तव्यो दृष्टो दाशतयेऽपि हि । घौ लोपोऽन्तिषदित्यत्र ॥*॥ अन्तिषत् ॥*॥तथाऽघौ येऽन्त्यर्थर्वसु ॥*॥ अन्तिये च दूरके ।

प्र.]तसिलादिष्विति पुंवद्भावः। सूर्यमत्स्ययोरिति। 'मत्स्यस्य ङ्यां सूर्यागस्त्ययोश्छे चे'त्येव सिद्धेऽर्थप्रदर्शनपरत्वाल्लाघवेऽनादरः कृतः। सौरीय इति। सौर्यस्याऽयमिति वृद्धाच्छः।अगस्त्यस्यापत्यमिति ऋष्यण्। तदन्तान्ङीप् छश्च। नक्षत्राणीति। नक्षत्रसंवन्धिन्यणीत्यर्थः । तिष्यपुष्ययोरित्युभयोपादानात्सिध्यशव्दस्य यलोपाऽभावः । अन्तित इति । 'अपादाने चाहीयरुहो'रिति तसिः । तादेश्चेति । चकारात्कादेश्च। यदा तादेस्तदाऽन्तमः, कादिलोपे त्वन्तितमः । तसीत्येष इति । 'कादिलोपश्च वहुल'मित्येव विषयमनुपादाय पठितव्यमित्यर्थः । दाशतय इति । दशावयवा अस्य दशतयः। तत्र भवो दाशतयः—चतुःषष्ट्याख्यो ग्रन्थः । घौ लोप इति।

उ.]कारलोपस्येति।अणि यो यस्येति लोपस्तस्य व्याश्रयत्वादसिद्धत्वाऽभाव इत्यर्थः। एवं चेदमेवोपधाग्रहणं सह तेनाऽसिद्धत्वे ज्ञापकमिति भावः। इत्येव सिद्ध इति । सूर्यशव्दस्य द्विरपाठाल्लाघवं भवतीति भावः । छश्चेति । आगस्त्यस्यायमित्यर्थ इति भावः।नक्षत्रसंवन्धिनीति।नक्षत्रवाचकाद्योऽण् स सर्वोऽपि गृह्यते।अत एव तिष्ये पुष्ये च भवस्तैषःपौषः।इदमेव ध्वनयता भगवता तैषं पौष इति लिङ्गभेदेनोदाहृतम्। आद्यस्य तिष्येण युक्तमहरित्यर्थः। अन्त्यस्य पुष्ये भव इत्यर्थः। व्यावर्त्यं तु तिष्यसंज्ञकपुरुषस्येदं तैष्यमित्याहुः।तत्र तिष्यस्य प्राप्ते नियमार्थं, पुष्यस्य त्वप्राप्ते विधिः। सूत्रेऽर्थग्रहणमस्तु किमुभयोपादानेन, तत्राऽऽह—उभयोपादानेति । ननु तसीत्यस्याऽभावे सर्वत्र कादिलोपः स्यादत आह—कादिलोपो वहुलमिति । एवं चेष्टविषये लोपसिद्धिरिति भावः। चतुःषष्ट्याख्य इति । चतुःषष्ट्यध्याययुक्तत्वाच्चवह्वृचानां

१ 'विषयगणनं च' । २ 'सूरी' 'मात्सी' । ३ 'छे च ङ्याश्च' इति केचित्पठन्ति । ४ 'नक्षत्राऽणि यलोपः'इत्यन्तं वार्त्तिकमन्ये। ५ 'लोपः'। ६ 'पौषम्'। ७ 'अन्तित आगतो न' । ८क्वचिन्न।९श्लोकवार्त्तिकम्।१० 'घौ'। ११ 'यत्यथर्वे'। १२ 'पत्यमि' ।

## विल्वकादिभ्यश्छस्य लुक् ॥ ६।४।१५३ ॥

॥*॥ छग्रहणं शक्यमकर्तुम् ॥*॥ इह कस्मान्न भवति बिल्वकेभ्यः ?॥ भस्येति वर्तते ॥ एवमपि बिल्वकाय—अत्र प्राप्नोति ॥ तद्धितस्येति वर्तते ॥ एवमपि बिल्वकस्य विकारोऽवयवो वा बैल्वकः—अत्र प्राप्नोति ॥ तद्धिते तद्धितस्येति वर्तते ॥ एवमपि बिल्वकीयायां भवो बैल्वकः, बैल्वकस्य किंचिद्बैल्वकीयम्—अत्र प्राप्नोति॥*॥न स बिल्वकात्[3]॥*॥विल्वकादिभ्यो यो विहित

प्र.] द्युशब्देनोत्तरपदं पूर्वाचार्यप्रसिद्ध्योच्यते।अन्तिके सीदतीति सत्सूद्विषेति क्विप्। 'पूर्वपदा'दिति षत्वम्। अघाविति। अनुत्तरपद इत्यर्थः। ये—यत्प्रत्यये परतः, अन्तीति कृतकादिलोपोऽन्तिकशब्दो दृश्यतेऽथर्ववेदे। अन्तिके भव इति 'भवे च्छन्दसी'ति यति कृतेऽन्तिय इति भवति। कादिलोपस्यासिद्धवदत्राऽऽभादित्यसिद्धत्वाद्यस्येति लोपो न भवति। [ सूर्यतिष्यागस्त्य ] ॥

बिल्व। छग्रहणमिति। कृतकुगागमस्य निर्देशाच्छ एव ग्रहीष्यत इति भावः। बिल्वकेभ्य इति। विल्वशब्दादल्पादावर्थे कप्रत्ययः।असति छग्रहणे कुगागमनिर्देश एव न निश्चीयेतेति कप्रत्ययान्तादपि परस्य भ्यसो लुक्प्रसङ्गः। भस्येति वर्तत इति। तत्राऽर्थाद्विभक्तिविपरिणामे सति भसंज्ञकेभ्यः परस्य लुग्भवति। बैल्व इति। 'अनुदात्तादेश्चे'त्यञ्। तद्धित इति। 'नस्तद्धित' इत्यतस्तद्धित इति वर्तते। तेन 'बिल्वकादिभ्यो भसंज्ञकेभ्यः परस्य तद्धितस्य तद्धिते परतो लुग्भवती'ति सूत्रार्थः संपद्यते। एवमपीति। बिल्वा विद्यन्तेऽस्यामिति 'उत्करादिभ्यश्छः' 'नडादीनां कुक्चे'ति छः, कुगागमश्च। ततस्तत्र भव इत्यण्। तस्मिन्परतश्छस्य लुक्। ततो वृद्धाच्छः। असति च्छग्रहणे छे परतोऽणो लुक्प्रसङ्गः। ततश्च 'न लुमताऽङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधाद्वृद्ध्यभावे रूपं न सिध्येत्। न स बिल्वकादिति। 'विहित' इति शेषः। बिल्वकादिभ्यो यो विहित इति।

उ.] संहिता तथोच्यते। सैव दशमण्डलाख्यावयवसत्त्वाद्दाशतयशब्दवाच्या। ननु कादिलोपे यस्येति लोपेऽन्तिय इत्यसङ्गतमत आह—कादिलोपस्येति।

बिल्वका। कृतकुगिति। नडाद्यन्तर्गणबिल्वादयः कृतकुकोऽत्र गृह्यन्त इति ततः परश्छ एव संभवतीति भावः। ननु कृतकुगागमनिर्देशे कथं 'बिल्वकेभ्य' इत्यत्र प्राप्तिरत आह—असतीति। नन्वनुवर्तमानमपि भस्येत्यन्वयाऽयोग्यमत आह—तत्रार्थादिति। अनुदात्तादेश्चेति। अपवादत्वेन कोपधत्वादणिति वक्तुमुचितम्। तद्धितस्येति। हलस्तद्धितस्येत्यतस्तदनुवृत्तेरिति भावः। नन्वणो लुका लोपेन वा निवृत्तौ विशेषाऽभावोऽत आह—ततश्चेति। व्याश्रयत्वाच्च पूर्वलुको नासिद्ध-

१ भाष्यमिदमधिकमन्ये। २ 'छाधत्त'। ३ इदं भाष्यमधिकमन्ये। ४ 'द्युशब्देन'।

इत्युच्यते न चासौ बिल्वकशब्दाद्विहितः ॥ किं तर्हि ? ॥ बिल्वकीयशब्दात् ॥ 'एवं तर्हि सिद्धे सति यच्छग्रहणं करोति तज्ज्ञापयत्याचार्यो—'भवत्येषा परिभाषा संनियोगशिष्टानामन्यतराऽभाव उभयोरप्यभाव' इति। तस्माच्छग्रहणं कर्तव्यं—छस्यैव लुग्यथा स्यात्कुको मा भूदिति । [ बिल्वकादिभ्यश्छस्य ] ॥

## तुरिष्ठेमेयःसु ॥ ६।४।१५४ ॥

॥*॥ तुः सर्वस्य लोपः॥*॥तुः सर्वस्य लोपो वक्तव्यः । अन्त्यस्य लोपो मा भूदिति ॥ स तर्हि वक्तव्यः ?॥ न वक्तव्यः । ॥*॥ तुः सर्वलोपविज्ञानम-

प्र.]बिल्वकादिभ्य इत्यागन्तुनाऽकारेण कृतकुगागमनिर्देशः।तेनायमर्थः—भाविकुगागमेभ्यो बिल्वादिभ्यो यो विहितः प्रत्ययस्तस्य तद्धिते लुग्भवति । न च च्छादन्यो भाविकुगागमेभ्यो बिल्वादिभ्यः प्रत्ययो विधीयत इति नार्थश्छग्रहणेन । एवं तर्हीति । छग्रहणं छमात्रस्य लुग्यथा स्यात्कुगागमो मा निवृतदित्येवमर्थं क्रियते । यदि चैषा परिभाषा न स्यात्तदा कुको नैव निवृत्तिः प्राप्नोतीति किं तदभावार्थेन च्छग्रहणेन ?। क्वचित्त्वेषा परिभाषा नाऽऽश्रीयते। यथा 'श्यैनेय' इत्यादौ यस्येति लोपेन निवृत्तेऽपीकारे तत्संनियुक्तो नकारो न निवर्त्तते । तथा च 'स्त्रियाः पुंव'दित्यत्रोक्तम्—'एतभार्य इत्यत्र पुंवद्भावेन स्त्रीप्रत्ययमात्रस्य निवृत्तिः क्रियतेऽर्थस्य त्वनिवृत्तत्वान्नकारस्य श्रवणं प्रसज्येते'ति।तथा 'श्रोत्रियस्य घन्लोपश्चे'ति घे निवृत्तेऽपि श्रोत्रभावो न निवर्तत इति तत्राऽनित्या परिभाषेति प्रतिविधेयम् ।[बिल्वकादिभ्यः]॥
तुरि । तुः सर्वस्येति । सर्वस्य तृशब्दस्य लोपो न त्वलोऽन्त्यस्येत्यर्थः ।

उ.]त्वम्।ननु कप्रत्ययान्तबिल्वकप्रकृतिकविकाराद्यर्थकाऽणन्तबैल्वकशब्दादिदमर्थे छे बैल्वकीय इत्यादौ लुक् स्यात्, तस्याऽणो बिल्वकाद्विहितत्वादत—कृतकुगागमेति । गणपाठस्य शीघ्रोपस्थितिकत्वेन तेषामेव ग्रहणात् । नहि कान्तानां क्वचित्पाठोऽस्ति । गणपाठसत्त्वेनैव च प्रकारवाचिता नाऽऽदिशब्दस्येति भावः ।
भाविकुगागमेभ्य इति । कुक्संनियोगेन प्रत्ययविधानादिति भावः । छग्रहणेनेति । न च ज्ञापितेऽपि कथं चारितार्थ्यं कुग्विशिष्टानुवादसामर्थ्येनैव तदनिवृत्तेः। अन्यथा 'बिल्वादिभ्य' इत्येव वदेत् । बिल्वादय एव हि नडादौ पठिताः। न च बिल्वादिभ्यो भवाद्यर्थाऽणादीनामपि लुगापत्तिः, लक्षणप्रतिपदोक्तपरिभाषया बिल्वादिपुरस्कारविहितप्रत्ययस्यैव लुग्विधानादिति वाच्यम् । ततोऽपि प्रतिपदोक्तत्वेन बिल्वादिभ्योऽणिति विकारार्थस्य लुगापत्तिवारणार्थं तत्सार्थक्यादिति भाष्याशयात् । नकारो न निवर्तत इति । 'अचः परस्मि'न्निति स्थानिवत्त्वेनैव सिद्धेरिदं चिन्त्यम् । श्रोत्रियस्येत्यादि त्वनित्यत्वफलमेव। [ बिल्वकादिभ्यश्छस्य लुक् ] ॥

१ अपिः क्वचिन्न। २ 'तस्यैव'। ३ लुसम् । ४'तथा च' । ५'घलोप'। ६'ग्रहणात्।

